ॐ

# जैमिनीयोपनिषद्ब्राह्मणम्

## प्रथमोऽध्यायः

### प्रथमोऽनुवाकः

### प्रथमः खण्डः

प्रजापतिर्वा इदं त्रयेण वेदेनाजयत् । यदस्येदं जितं तत् स ऐक्षत । इत्थं चेद् वा अन्ये देवा अनेन वेदेन यक्ष्यन्ते । इमां वाव ते जितिं जेष्यन्ति येयं मम ॥ १ ॥ 5

हन्तास्य त्रयस्य वेदस्य रसमाददा इति स **भूर्** इत्येव ऋग्वेदस्य रसमादत्त । सेयं पृथिव्यभवत् । तस्य यो रसः प्राणेदत् सोऽग्नि-रभवद् रसस्य रसः ॥ २ ॥ 10

**भुव** इत्येव यजुर्वेदस्य रसमादत्त । तदिदमन्तरिक्षमभवत् । तस्य यो रसः प्राणेदत् स वायुरभवद् रसस्य रसः ॥ ३ ॥

**स्वर् (सुवर्)** इत्येव सामवेदस्य रसमादत्त । सासौ द्यौरभवत् । तस्य यो रसः प्राणेदत् स आदित्योऽभवद् रसस्य रसः ॥ ४ ॥

अथैकस्यैवाक्षरस्य रसं नाशक्नोद् आदातुम् । **ओम्** इत्येतस्यैव । 15 सेयं वागभवत् । ओमेव नामैषा । तस्या उ प्राण एव रसः ॥ ५ ॥

तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम । ब्रह्मो उ गायत्री । तद् उ ब्रह्माभिसंपद्यते । अष्टाशफाः पशवः । तेन उ पशव्यम् ॥ ६ ॥

**इति प्रथमेऽध्याये प्रथमेऽनुवाके प्रथमः खण्डः** 19

---

5 K. begins: हरि. श्री गणपतये नम. अविघ्नमस्तु । and adds ॐ before प्रजापतिः, L. पदेन for वेदेन.

6. My. एपत इत्थ for ऐक्षत । इत्थ

8. My. हिन्ता, L. हन्ता, P. हन्त for हन्तास्य.

9 My. Throughout आदत्ते for आदत्त.

10 MyL after रसः । adds. स्वरित्येव सामवेदस्य रसमादत्त । सेयं (My स्वय) पृथिव्यभवत् । तस्य यो रस प्राणेदत् सोऽग्निरभवद्रसस्य रसः ।

13. P सोऽसौ for सासौ.

15 My. काक्षरस्य for वाक्षरस्य, K रसमशक्नोद् for रसं नाशक्नोद्

४

## द्वितीयः खण्डः

स यद् **ओम्** इति सोऽग्निः, **वाग्** इति पृथिवी । **ओम्** इति वायुः, **वाग्** इति अन्तरिक्षम् । **ओम्** इति आदित्यः, **वाग्** इति द्यौः । **ओम्** इति प्राणः, **वाग्** इत्येव वाक् ।। १ ।।

5 स य एवं विद्वान् उद्गायति **ओम्** इत्येव अग्निमादाय पृथिव्यां प्रतिष्ठापयति । **ओम्** इत्येव वायुमादाय अन्तरिक्षे प्रतिष्ठापयति । **ओम्** इत्येव आदित्यमादाय दिवि प्रतिष्ठापयति । **ओम्** इत्येव प्राणमादाय वाचि प्रतिष्ठापयति ।। २ ।।

तदेतच्छैलना गायत्रं गायन्ति । ओवा ओवा ओवा हुम्भा
10 ओवा इति ।। ३ ।।

तदु ह तत् पराङ् इवानायुष्यमिव । तद् वायोश्च अपां चानु वर्त्म गेयम् ।। ४ ।।

˘ द्ध वै वायुः पराङेव पवेत क्षीयेत । स पुरस्ताद् वाति । स दक्षिणतः । म पद्द ˘..त् । स उत्तरतः । स उपरिष्टात् । स सर्वा दिशोऽनुसंवाति ।। ५ ।।

15 तदेतद् आहुरिदानीं वा अयमितोऽवासीत् । अथेत्थाद् वातीति । म यद्रेष्माणम् अजमानो निवेष्टमानो वाति । क्षयादेव बिभ्यत् ।। ६ ।।

यदु ह वा आपः पराचीरेव प्रसृताः स्यन्देरन् क्षीयेरंस्ताः । यदङ्कांसि कुर्वाणा निवेष्टमाना आवर्तान् सृजमाना यन्ति क्षयादेव बिभ्यतीः । तदेतद् वायोश्चैव अपां चानु वर्त्म गेयम् ।। ७ ।।

20 **इति प्रथमेऽध्याये प्रथमेऽनुवाके द्वितीय खण्डः**

---

9. My.° च्छेलन for °च्छैलना; P. ओवा३ च् ओवा३ च्, L. ओवाटचच् ओवाटचच् ओवाटचच् My. ओव ओवा.. .for ओवा ओवा ओवा, My. हुंवा, K हुंमा for हुम्भा.
11. K पगजि जीवा° for पराङ् इवा°.
13. My L. यद्वे for यध्द वै; K. विराजेव for पगङेव.
15. L °पासीत् for °वासीन्; K. अथेथात् for अथेत्थात्;
16. My. यदिषमाण for यद्रेष्माण; My. इम नो, L. यजमानो, P. जनमानो for अजमानो.
18. K. Om. from यदङ्कांमि to °हैप्यसि यो p ११ L. 3: MyL. यदङ्कासि for यदङ्कामि

## तृतीयः खण्डः

ओवा ओवा ओवा हुंभा ओवा इति करोत्येव । एताभ्यां सर्वमायुरेति ॥ १ ॥

स यथा वृक्षम् आक्रमणैराक्रममाण इयाद् एवमेव एते द्वे द्वे देवते संधाय इमाँल्लोकान् रोहन्नेति ॥ २ ॥ 5

एक उ एव मृत्युरन्वेत्यशनयेव ॥ ३ ॥

अथ हिंकरोति । चन्द्रमा वै हिंकारः । अन्नम् उ वै चन्द्रमाः । अन्नेन अशनयां घ्नन्ति ॥ ४ ॥

तां ताम् अशनयामन्नेन हत्वा **ओम्** इत्येतमेवादित्यं समयातिमुच्यते । एतदेव दिवश्छिद्रम् ॥ ५ ॥ 10

यथा खं वानसः स्याद्रथस्य वैवमेतद् दिवश्छिद्रम् । तद्रश्मिभिः संछन्नं दृश्यते ॥ ६ ॥

यद् गायत्रस्योर्ध्वं हिंकारात् तदमृतम् । तदात्मानं दध्यात् । अथो यजमानम् । अथ यदितरत् सामोर्ध्वं तस्य प्रतिहारात् ॥ ७ ॥

स यथाद्भिरापः संसृज्येरन्, यथा अग्निनाग्निः संसृज्येत यथा 15
क्षीरे [ण] क्षीरमासिच्यात् (°च्येत?) एवमेवैतद् अक्षरमेताभिर्देवताभिः संसृज्यते ॥ ८ ॥

इति प्रथमेऽध्याये प्रथमेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

तं वा एतं हिंकारं हिंभा इति हिंकुर्वन्ति । श्रीर्वै भाः । असौ 20
वा आदित्यो भा इति ॥ १ ॥

---

2. My. ओव ओवा, L. ओवा (टघच्) ओवा (टघच्) ओवा (टघच्) for ओवा....
4. My. after एवं upto संघायेमां broken.
5. My. संजायेमां, for संधाय इमान्;
6. P. °शनयैव for °शनयेव.
9. My. हत्योमि....च्यते. (broken)
11. MyL. वा न स स्याद्रसस्य for वानसः स्याद्रथस्य.
14. L. त्वदितरत् सामामोर्ध्वं for यदितरत् सामोर्ध्वं.
16. क्षीरमासिच्यात् see CN.
20. My. श्री....त्येतं (p. 10. L. 1.) broken.

एतं ह वा एतं न्यङ्क्मनु गंभ इति । यद्ध इति स्त्रीणां प्रजननं निगच्छति तस्मात् ततो ब्राह्मण ऋषिकल्पो जायतेऽतिव्याधी राजन्यः शूर ॥ २ ॥

एतं ह वा एतं न्यङ्क्मनु वृषभ इति । यद् भ इति निगच्छति तस्मात्ततः पुण्यो बलीवर्दो दुहाना धेनुरुक्षा दशवाजी जायन्ते ॥ ३ ॥

एतं ह वा एत न्यङ्क्मनु गर्दभ इति । यद् भ इति निगच्छति तस्मात् स पापीयान् श्रेयसीषु चरति । तस्मादस्य पापीयसः श्रेयो जायतेऽश्वतरो वा अश्वतरी वा ॥ ४ ॥

एत ह वा एत न्यङ्क्मनु कुभ्रं इति । यद् भ इति निगच्छति
10 तस्मात् स अनार्यः सन्नपि राज्ञः प्राप्नोति ॥ ५ ॥

तं हैतमेके हिंकार हिभा ओवा इति बहिर्धेव हिंकुर्वन्ति । बहिधव वै श्रीः । श्रीर्वै साम्नो हिंकार इति ॥ ६ ॥

स य एन तत्र ब्रूयाद् बहिर्धान्वा अयं श्रियमधित पापीयान् भविष्यतीति । स यदा वै म्रियते अथाग्नौ प्रास्तो भवति । "क्षिप्रे
15 बत मरिष्यत्यग्नावेन प्रासिष्यन्ति" इति । तथा हैव स्यात् ॥ ७ ॥

तस्मादु हैत हिंकारं हिं वो इत्यन्तरिवैवात्मन्नर्जयेत् । तथा ह न बहिर्धा श्रियं कुरुते । सर्वमायुरेति ॥ ८ ॥

18　इति प्रथमेऽध्याये प्रथमेऽनुवाके चतुर्थ खण्ड

---

1. My एतान्यङ्क, L एतन्यङ्क throughout. see CN: P गर्भ for गभ.
5. L पुण्यबली° for पुण्यो बली°. L. धेनू रुक्षा दश वाजीति, My. धेनुरुक्षा दश वाजिति for धेनुरुक्षा दशवाजी.
9. My कभ्र. My कूभ्र for कुभ्र
12. My. बहिर्धेव for बहिर्धेव
14. MyP. om. इति.
16. P. om. उ; LMy °वात्म न जयेत् for °वात्मन्नर्जयेत्

## पञ्चमः खण्डः

सा हैषा खलु देवतापसेधन्ती तिष्ठति । इदं वै त्वमत्र पाप-
कर्मणे हैष्यसि । यो वै पुण्यकृत् स इहेयादिति ॥ १ ॥

स ब्रूयाद् अपश्यो वै त्वं तद् यदहं तदकरवम् । तद्वै मा त्वं
नाकारयिष्यः । त्वं वै तस्य कर्तासीति ॥ २ ॥ 5

स ह वेद सत्यं माहेति । सत्यं हैषा देवता । स ह तस्य नेशे
यदेनमपसेधेत् । तमुपैव ह्वयते ॥ ३ ॥

अथ होवाचैष को वा वार्ष्णोऽनुवक्ता वा सात्यकीर्तः । उतैषा
खलु देवतापसेद्धुम् एव भ्रियते । अस्यै दिशो दिवोऽन्तः ॥ ४ ॥

तदिमे द्यावापृथिवी संश्लिष्यतः । यावती वै वेदिस्तावतीयं 10
पृथिवी । तद्यत्रैतच्चत्वालं खातं तत्संप्रति स दिव आकाशः ॥ ५ ॥

तद् बहिष्पवमाने स्तूयमाने मनसोद्गृह्णीयात् । स यथोच्छ्रायं
प्रति अस्य प्रपद्येत । एवमेवैतया देवतया इदममृतमभिपर्येति यत्रा-
यमिदं तपतीति ॥ ६ ॥

इति प्रथमेऽध्याये प्रथमेऽनुवाके पञ्चम खण्ड. 15

---

2. MyP. खला for खलु; My. वसेयं, K. °वसेधन्ती for °प सेधन्ती; L. adds इति after सेधन्ती.
3. K om.from यदङ्क्षांसि p 8. L. 18 to हैष्यसि । यो; My. इहैयाद् for इहेयाद्.
4. My त्वदत्करवं for तदकरवं.
5. K. °कारैष्यः for °कारयिष्यः ।
6. P. सा for स.
7 अवसेधेत् for अपसेधेत्; P. सप्तम्, My L. मतम् for तम्.
8. P. °चैक्ष्वाको, KMy °चैक्षको for °चैष को; My. सत्य for सात्य.
9 P My K. खला for खलु; K. °वसेद्धुम् for °पसेद्धुम्; My भ्रियते for भ्रियते; P. अस्यै दिशः ॥ ४ ॥ (तद्) दिवोऽन्तः । for अस्यै दिशो दिवोऽन्त
11. K त्वातं for खातं.
13. P. यस्य for अस्य; K °वैतमेतया, My. °वैकतया for °वैतया.

## षष्ठः खण्डः

अथ होवाच गोबलो वार्ष्णः क एतमादित्यमर्हति समयैतुम् । दूराद्वा एष एतत् तपति न्यङ् । तेन वा एतं पूर्वेण सामपथः । तदेव मनसाहृत्योपरिष्टात् एतस्यैतस्मिन्नमृते निदध्यादिति ॥ १ ॥

5 तदु होवाच शाट्यायनिः । समयैवैतदेनं कस्तद् वेद । यद्येता आपो वा अभितः । यद्वायुं वा एष उपह्वयते । रश्मीन् वा एष तस्मै व्यूहतीति ॥ २ ॥

अथ होवाच उलूक्यो जानश्रुतेयः । यत्र वा एष एतत्तपति एतदेवामृतम् । एतच्चेद्वै प्राप्नोति ततो मृत्युना पाप्मना व्यावर्तते ॥ ३ ॥

10 कस्तद् वेद यत् परेणादित्यमन्तरिक्षमिदमनामयनमवरेण ॥ ४ ॥

अथैतदेवामृतम् । एतदेव मां यूयं प्रापयिष्यथ । एतदेवाहं नातिमन्य इति ॥ ५ ॥

तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम । ब्रह्म उ गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफा पशवः । तेनो पशव्यम् ॥ ६ ॥

15 इति प्रथमेऽध्याये प्रथमेऽनुवाके षष्ठः खण्डः

---

## सप्तमः खण्डः

17 ता एता अष्टौ देवताः । एतावदिदं सर्वं तेन करोति ॥ १ ॥

---

2. In MyLP. अथ होवाच forms the concluding sentence of the fifth Khanda.
3. K. तवति for तपति; MyL. न्यम् for न्यङ्.
5. K. °वैतमेनं P. °वातदेनं for °वैतदेनं.
6. K. आवो for आपो; MyLK. यद्वायं for यद्वायुं; MyL. तस्यै, तदेतस्मै for तस्मै.
8. MyL P. उलुक्यो for उलूक्यो; MyL. यत् for एतत्.
10. P My L. °लयन° for °मयन°.
11. MyL. प्रापयिषत, K. प्रापिपंपत for प्रापयिष्यथ.
12. MyL. °मन्यत for °मन्य.
17. MyLP. ते for तेन.

स नैषु लोकेषु पाप्मने भ्रातृव्यायावकाशं कुर्यात् । मनसैनं निर्भजेत् ॥ २ ॥

तदेतदृचाभ्यनूच्यते—

**चत्वारि वाक् परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः ।** 5
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मनुष्या वदन्ति ॥** (ऋ.वे. १.१६४.४५)

इति ॥ ३ ॥

तद् यानि **तानि गुहा त्रीणि नेङ्गयन्ति** [इति] इम एव ते लोकाः ॥ **तुरीयं वाचो मनुष्या वदन्ति** इति । चतुर्भागो ह वै तुरीयं 10 वाचः । सर्वयास्य वाचा सर्वैरेभिर्लोकैः सर्वेणास्य कृतं भवति । य एवं वेद ॥ ४ ॥

स यथाश्मानमाखणमृत्वा लोष्टो विध्वंसेत । एवमेव स विध्वसेत । य एवं विद्वांसमुपवदेत् ॥ ५ ॥

स एषोऽश्माखणो यत् प्राणः । स यथाश्मानमाखणमृत्वा लोष्टो 15 विध्वंसते एवमेव स विध्वंसते । य एवं विद्वांसमुपवदति ॥ ६ ॥

**इति प्रथमेऽध्याये प्रथमेऽनुवाके सप्तमः खण्ड**

॥ प्रथमेऽध्याये प्रथमोऽनुवाकः समाप्तः ॥ 18

---

13. K. °त्मानमृत्वा for °श्मानमाखणमृत्वा; P. विध्वसते, MyL. विध्वंस्ते for विध्वंसेत.
14. P °वदति, L. °वदेत for °वदेत्.
15. PMy. om. एषो....°वदति ॥
16. L. विद्वान् समुप° for विद्वासमुप°.

## द्वितीयोऽनुवाकः

### प्रथमः खण्डः

प्रजापतिर्वा इदं त्रयेण वेदेनाजयत् । यदस्येदं जितं तत् ॥ १ ॥

स ऐक्षत । इत्थं चेद्वा अन्ये देवा अनेन वेदेन यक्ष्यन्ते । इमां वाव ते
5 जितिं जेष्यन्ति येय मम ॥ २ ॥

हन्तेमं त्रयं वेदं पीळयानीति । स इमं त्रयं वेदमपीळयत् । तस्य पीळयन्नेकमेवाक्षरं नाशक्नोत् पीळयितुम् **ओम्** इति यदेतत् ॥ ३ ॥

एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥ ४ ॥

10 स इमं रसं पीळयित्वापनिधायोर्ध्वोऽद्रवत् ॥ ५ ॥

तं द्रवन्तं चत्वारो देवानाम् अन्वपश्यन् । इन्द्रश्चन्द्रो रुद्रः समुद्रः । तस्मादेते श्रेष्ठा देवानाम् । एते ह्येनमन्वपश्यन् ॥ ६ ॥

स योऽयं रस आसीत् तदेव तपोऽभवत् ॥ ७ ॥

त इमं रसं देवा अन्वैच्छन् । तेऽभ्यपश्यन् । तपो वा
15 अभूदिति ॥ ८ ॥

इममु वै त्रयं वेदं मरीमृशित्वा तस्मिन् एतदेवाक्षरमपीळितमविन्दन् **ओम्** इति यदेतत् ॥ ९ ॥

एष उ ह वाव सरसः । तेनैनं प्रायुवन् । यथा मधुना लाजान्
19 प्रयुयाद् एवम् ॥ १० ॥

---

3. MyL यदस्यैदं for यदस्येदं.
6. My. पीळयत् for अपीळयत्.
10. My. पीडयित्वा परि° for पीळयित्वापनि°; My. °भीवत् for °द्रवत्.
11. MyL. द्रवं for द्रवन्तं.
12. MyL. add हि before एते
14. P. अन्वैक्षन्त for अन्वैच्छन्, My L. तेभ्य. for तेऽभ्य°.
16. My. °पीडित निन्दन् for °पीळितमविन्दन्
18. My. रस. for सरसः; My L. प्रयुवन् for प्रायुवन्;
19. L. प्रययात्, My. प्रयायात् for प्रयुयात्.

तेऽभ्यतप्यन्त । तेषां तप्यमानानामाप्यायत वेदः । तेऽनेन च तपसापीनेन च वेदेन तामु एव जितिमजयन् यां प्रजापतिरजयत् । त एते सर्व एव प्रजापतिमात्रा अया३म् अया३म् इति ॥ ११ ॥

तस्मात् तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यशः । स य एतदेवं वेद ॥ १२ ॥ 5

एवमेवापीनेन वेदेन यजते । यदो याजयति । एवमेवापीनेन वेदेन याजयति ॥ १३ ॥

तस्य हैतस्य नैव काचनार्तिरस्ति । य एवं वेद । स य एवैनमुपवदति स आर्तिम् आर्च्छति ॥ १४ ॥

इति प्रथमेऽध्याये द्वितीयेऽनुवाके प्रथमः खण्ड 10

---

## द्वितीयः खण्डः

तदाहुर्यदोवा ओवा इति गीयते । क्वात्र ऋग्भवति । क्व सामेति ॥ १ ॥

ओमिति वै साम । वागिति ऋक् । ओमिति मनः । वागिति वाक् । ओमिति प्राणः । वागिति वाक् । ओमितीन्द्रः । वागिति सर्वे 15 देवाः । तदेतदिन्द्रमेव सर्वे देवा अनुयन्ति ॥ २ ॥

ओमित्येतदेवाक्षरम् । एतेन वै संसवे परस्येन्द्रं वृञ्जीत । एतेन ह वै तद्वको दाल्भ्यः आजिकेशिनामिन्द्रं ववर्ज । ओमित्येतेनैव निनाय ॥ ३ ॥ 19

---

1. My तेभ्यस्तप्यन्त, K. तेभ्यतप्यन्तं for तेऽभ्यतप्यन्त; L. तेनैनेन for तेऽनेन.
2. K. स्वां for यां.
3. L. अटचयाम् अटचयाम्, My अयाम् अयाम्, for अया३म् अया३म्.
6. My यतो for यदो.
9. P. सार्तिम्, K. सञ्चर्तिम् for स आर्तिम्; P. ऋच्छेति for आर्च्छति.
12. K. this Ms. encludes with गीयने.
17. My L. अवृञ्जीत for वृञ्जीत.
18. L. आजकेशीनम्, My आजिकेशीनाम् for आजिकेशिनाम्; My अववृज, L. अववज for ववर्ज.
19. P. आनिनाय for निनाय.

तान्येतान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम । ब्रह्म उ गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवः । तेनो पशव्यम् ।। ४ ।।

तस्यैतानि नामानि । इन्द्रः कर्माक्षिति अमृतं व्योमान्तो वाचः । बहिर्भूयः सर्व सर्वस्मादुत्तरं ज्योतिः । ऋतं सत्यं विज्ञानं विवाचनम-
5 प्रतिवाच्यम् । पूर्व सर्व सर्वा वाक् । सर्वमिदमपि धेनुः पिन्वते परागर्वाक् ।। ५ ।।

इति प्रथमेऽध्याये द्वितीयेऽनुवाके द्वितीय. खण्ड

## तृतीयः खण्डः

सा पृथक्सलिलं कामदुघाक्षिति प्राणसंहितं चक्षुःश्रोत्रं वाक्प्रभूतं
10 मनसा व्याप्तं हृदयोग्रं ब्राह्मणभक्तमन्नशुभं वर्पपवित्रं गोभगं पृथिव्युपरं तपस्तनु वरुणपरियतनम् इन्द्रश्रेष्ठं सहस्राक्षरं अयुतधारम् अमृतं दुहाना सर्वान् इमान् लोकानभिविक्षरतीति ।। १ ।।

तदेतत् सत्यमक्षरं यदोम् इति । तस्मिन्नापः प्रतिष्ठिताः । अप्सु पृथिवी । पृथिव्यामिमे लोकाः ।। २ ।।

15 यथा सूच्या पलाशानि संतृण्णानि स्युः एवमेतेनाक्षरेणेमे लोकाः संतृण्णाः ।। ३ ।।

तदिदमिमानतिविध्य दशधा क्षरति शतधा सहस्रधा अयुतधा
18 प्रयुतधा नियुतधा अर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ।।४।।

---

3. My °क्षीति, P. °क्षितिर् for °क्षिति.
4. P. बहूर् for बहिर्; My L. विजिज्ञानं for विज्ञानं.
9. P व्यहित for °सहितम्.
10. P. हृदयाग्रम् for हृदयोग्रम्; My °भत्रम्; L. भ्रक्त्रम् for भक्तम्.
11. My °वव्यतनं, L. °पर्यतनं for °परियतनं.
12. My L. दुहानाः for दुहाना; My °क्षरन्तीति for क्षरतीति.
15. My संतृणानि for संतृण्णानि.
16. My संतृणाः for संतृण्णाः.
17. My तदिमाम्, for तदिदमिमान्; L. इमाम् for इमान् ।
18. L. om. नियुतधा; My. अब्दधा for अर्बुदधा; My. om. न्यर्बुदधा; P. निर्बुदधा for न्यर्बुदधा; My निखर्वा L. निखर्वा च for निखर्वधा; L. अक्षिति for अक्षितिर्.

यथौघो विष्यन्दमानः परस्परो वरीयान् भवति एवमेवैतदक्षरं परस्परं वरीयो भवति ॥ ५ ॥

ते हैते लोका ऊर्ध्वा एव श्रिताः । इम एवं त्रयोदश मासाः ॥६॥

स य एवं विद्वानुद्गायति स एवमेवैताँल्लोकानतिवहृति । ओमित्येतेनाक्षरेण अमुमादित्यं मुखे आधत्ते । एष ह् वा एतदक्षरम् ॥ ७ ॥ 5

तस्य सर्वमाप्तं भवति । सर्वं जितम् । न ह्यस्य कश्चन कामोऽनाप्तो भवति । य एवं वेद ॥ ८ ॥

तद्ध पृथुर्वैन्यो दिव्यान् व्रात्यान् पप्रच्छ—

"स्थूणां दिवस्तम्भनीं सूर्यमाहुर्
अन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः । 10
अप्सु भूमीः शिश्रियरे भूरिभाराः
किंस्विन्महीरधितिष्ठन्त्यापः ॥" इति ॥ ९ ॥

ते ह् प्रत्यूचुः—

"स्थूणामेव दिवस्तम्भनीं सूर्यमाहुर्
अन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः । 15
अप्सु भूमीः शिश्रियरे भूरिभाराः
सत्यं महीरधितिष्ठन्त्यापः ॥" इति ॥ १० ॥

ओमित्येतदेवाक्षरं सत्यम् । तदेतदापोऽधितिष्ठन्ति ॥ ११ ॥

इति प्रथमेऽध्याये द्वितीयेऽनुवाके तृतीयः खण्डः

॥ प्रथमेऽध्याये द्वितीयोऽनुवाकः समाप्तः ॥ 20

---

1. P. परः—परो for परस्परो.
2. L. परस्परो, P. परः परो° for परस्परं.
4. My यः for Second सः.
5. My आदत्ते for आधत्ते.
11. My भूमिः शिरो, L. भूमिः शिशिरे for भूमीः शिश्रियरे.
17. My भूमिः शिश्शिरे, L. भूमिः शिशिरे for भूमीः शिश्रियरे.

## तृतीयोऽनुवाकः

### प्रथमः खण्डः

प्रजापति· प्रजा असृजत । ता एनं सृष्टा अन्नकाशिनीरभितः समन्तं पर्यविशन् ॥ १ ॥

5 ता अब्रवीत् । किंकामाः स्थ इति । अन्नाद्यकामा इत्यब्रुवन् ॥ २ ॥

सोऽब्रवीद् । एकं वा वेदमन्नाद्यं [यद्] असृक्षि [तत्] सामैव । तद्वः प्रयच्छानि इति ॥ ३ ॥

तन्नः प्रयच्छेत्यब्रुवन् ॥ ४ ॥

सोऽब्रवीद् इमान् वै पशून् भूयिष्ठम् उपजीवामः । एभ्यः प्रथमं
10 प्रदास्यामि इति ॥ ५ ॥

तेभ्यो हिंकारं प्रायच्छत् । तस्मात् पशवो हिंकरिकृतो विजिज्ञासमाना इव चरन्ति ॥ ६ ॥

प्रस्तावं मनुष्येभ्य· । तस्माद्‌ ते स्तुवत एवेदं मे भविष्यति अदो मे भविष्यति इति ॥ ७ ॥

15 आदि वयोभ्य· । तस्मात् तान्याददानान्युपावपातमिव चरन्ति ॥ ८ ॥

उद्‌गीथं देवेभ्योऽमृतम् । तस्मात्तेऽमृताः ॥ ९ ॥

प्रतिहारमारण्येभ्यः पशुभ्यः । तस्मात् ते प्रतिहताः तात्रस्यमाना इव चरन्ति ॥ १० ॥

इति प्रथमेऽध्याये तृतीयेऽनुवाके प्रथमः खण्डः

---

20 

### द्वितीयः खण्डः

उपद्रवं गन्धर्वाप्सरोभ्यः । तस्मात्ते उपद्रवं गृह्लन्त इव चरन्ति ॥ १ ॥

22 निधनं पितृभ्य· । तस्माद्‌ ते निधनसंस्थाः ॥ ॥ २ ॥

---

3. My. °रहितः for °रभितः
6. P. वै for वा; My L. सामेव for सामैव.
7 My L. तद्वस्° for तद्वः;
9. My °जीवा उ for °जीवाम.
11. P. °क्रतो for °कृतो
15. My °न्युपपातम् P. °न्दुपापपातम् for °न्युपावपातम्

तद् देभ्यस्तत् साम प्रायच्छत् । एतमेवैभ्यस्तदादित्यं प्रायच्छत् ॥ ३ ॥

स यदनुदितः स हिंकारः । अर्धोदितः प्रस्तावः । आसंगवम् आदिः । माध्यंदिन उद्गीथः । अपराह्णः प्रतिहारः । यदुपास्तमयं लोहितायति स उपद्रवः ॥ अस्तमित एव निधनम् ॥ ४ ॥ 5

स एष सर्वैर्लोकैः समः । तद् यदेष सर्वैर्लोकैः समः तस्मादेष एव साम । स ह वै सामवित् । स साम वेद य एवं वेद ॥ ५ ॥

ते अब्रुवन् । दूरे वा इदमस्मत् । तत्रेदं कुरु । यत्रोपजीवाम इति ॥ ६ ॥

तदृतूनभ्यत्यनयत् । स वसन्तमेव हिंकारमकरोत् । ग्रीष्मं प्रस्तावम् । वर्षामुद्गीथम् । शरदं प्रतिहारम् । हेमन्तं निधनम् । मासार्धमासावेव सप्तमावकरोत् ॥ ७ ॥ 10

तेऽब्रुवन् । नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवाम इति ॥८॥

तत् पर्जन्यमभ्यत्यनयत् । स पुरोवातमेव हिंकारमकरोत् ॥ ९ ॥

इति प्रथमेऽध्याये तृतीयेऽनुवाके द्वितीयः खण्डः 15

---

## तृतीयः खण्डः

जीमूतान् प्रस्तावम्, स्तनयित्नुमुद्गीथम्, विद्युतं प्रतिहारम्, वृष्टिं निधनम्, यद्वृष्टात् प्रजाश्चौषधयश्च जायन्ते, ते सप्तम्यावकरोत् ॥ १ ॥

तेऽब्रुवन् । नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवाम इति ॥ २ ॥

तद्यज्ञमभ्यत्यनयत् । स यजूंष्येव हिंकारमकरोत् । ऋचः प्रस्तावम् । सामान्युद्गीथम् । स्तोमं प्रतिहारम् । छन्दो निधनम् । स्वाहाकारवषट्कारावेव सप्तमावकरोत् ॥ ३ ॥ 20

---

4 L. आदित्यः for आदिः

10. My एव सन्तम् for वसन्तम्; My L. करोत् for अकरोत्;

11. My L प्रस्तावः । वर्षा उद्गीथः । शरत् प्रतिहारः । for प्रस्तावम्.... प्रतिहारम् ।

13. My. om. तेऽब्रुवन्. . हिंकारमकरोत् ॥ ९ ॥

17. My जीमूनार. for जीमूतान्; L. वृष्टिर् for वृष्टिं

तेऽब्रुवन् । नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवाग" ति ॥ ४॥

तत् पुरुषमभ्यत्यनयत् । स मन एव हिंकारमकरोत् । वाचं प्रस्तावम् । प्राणमुद्गीथम् । चक्षुः प्रतिहारम् । श्रोत्रं निधन" । रेतश्चैव प्रजां च सप्तमा (म्या ?) वकरोत् ॥ ५ ॥

5　तेऽब्रुवन् । अत्र वा एनत् तदकर्यत्रोपजीविष्याम इति ॥ ६ ॥

स विद्यात् । अहमेव सामास्मि । मय्येता देवता इति ॥ ७ ॥

**इति प्रथमेऽध्याये तृतीयेऽनुवाके तृतीयः खण्डः**

---

## चतुर्थः खण्डः

न ह दूरे देवता स्यात् । यावद्ध वा आत्मना देवानुपास्ते
10　तावदस्मै देवा भवन्ति ॥ १ ॥

अथ य एतदेवं वेद । अहमेव सामास्मि । मय्येताः सर्वा देवताः इति । एवं हास्मिन् एताः सर्वा देवता भवन्ति ॥ २ ॥

तदेतद् देवश्रुत् साम । सर्वा ह वै देवताः शृण्वन्ति । एवंविदं पुण्याय साधवे । ता एनं पुण्यम् एव साधु कारयन्ति ॥ ३ ॥

15　स ह स्माह सुचित्तः शैलनः । यो यज्ञकामो मामेव स वृणीताम् । तत एवैनं यज्ञ उपनंस्यति । एवंविदं ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति । ता अस्मै तृप्तास्तथा करिष्यन्ति यथैनं यज्ञ उपनंस्यति इति ॥

**इति प्रथमेऽध्याये तृतीयेऽनुवाके चतुर्थः खण्डः**

20　॥ प्रथमेऽध्याये तृतीयोऽनुवाकः समाप्तः ॥

---

1. My om. यत्रोपजीवाम इति ..एनत्तदकर् (L 5)
6. My मयैता for मय्येता
9. L देवना. for देवता, My यावस्त्रा for यावद्ध
11 My मयैना for मय्येताः;
12 My एस्म for एव
15 MyL शैलनम्; for शैलन

## चतुर्थोऽनुवाकः

### प्रथमः खण्डः

देवा वै स्वर्गं लोकमैप्सन् । तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाप्नुवन् ॥ १ ॥

ते देवाः प्रजापतिमुपाधावन् । स्वर्गं लोकमैप्सिष्म । तं न शयाना नासीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणापाम । तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामेति ॥ २ ॥ 5

तानब्रवीत् । साम्नानूचेन स्वर्गं लोकं प्रयातेति । ते साम्नानूचेन स्वर्गं लोकं प्रायन् ॥ ३ ॥

प्र वा इमे साम्नागुरिति । तस्मात् प्रसाम । तस्माद् प्रसाम्यन्नम् अत्ति ॥ ४ ॥ 10

त एतानि ऋक्पदानि शरीराणि धुन्वन्त आयन् । ते स्वर्गं लोकमजयन् ॥ ५ ॥

देवा वै स्वर्गं लोकमायन् । त एतानि ऋक्पदानि शरीराणि धून्वन्त आयन् । तान्या दिवः प्रकीर्णान्यशेरन् । अथेमानि प्रजापतिर्ऋक्पदानि संचित्याभ्यर्चत् । यदभ्यर्चत् ता एवर्चोऽभवन् ॥ ६ ॥ 15

इति प्रथमेऽध्याये चतुर्थेऽनुवाके प्रथमः खण्डः

---

### द्वितीयः खण्डः

सैवर्गभवत् । इयमेव श्रीः । अतो देवा अभवन् ॥ १ ॥ 19

---

3 My °मेप्सन् for °मैप्सन्
5. My मेप्सिष्म for मैप्सिष्म
6. My केचन for केनचन
8. My प्रयाभ for प्रयात
12. P. adds देवा वै स्वर्गं लोकमायन् । before त एतानि
13. My L. after लोकमजयन् add: अथेमानि प्रजापतिर्ऋक्पदानि शरीराणि संचित्याभ्यर्चत् । यदभ्यर्थत् ता एवर्चोऽभवन्.
14. P. om. देवा वै स्वर्गं लोकमायन् । त एतानि ऋक्पदानि शरीराणि धून्वन्त आयन् ।
16 My om. यदभ्यर्चत् .... °भवन्; L om. ता एवर्चोऽभवन्. see CN.

अथैषामिमामसुराः श्रियमविन्दन्त । तदेवासुरमभवत् ॥ २ ॥

ते देवा अब्रुवन् या वै नः श्रीरभूद् अविन्दन्त तामसुराः । कथं न्वेषामिमां श्रियं पुनरेव जयेम इति ॥ ३ ॥

तेऽब्रुवन् । ऋच्येव साम गायाम इति ॥ ४ ॥

5 ते पुनः प्रत्याद्रुत्यर्चि सामागायन् । तेनास्माल्लोकादसुरा-ननुदन्त ॥ ५ ॥

तद्धै माध्यंदिने च सवने तृतीयसवने च नर्चोऽपराधोऽस्ति । स यत्ते ऋचि गायति तेनास्माल्लोकाद् द्विषन्तं भ्रातृव्यं नुदते । अथ यदनूचेन देवतासु प्रातः सवने गायति तेन स्वर्गं लोकमेति ॥ ६ ॥

10 प्रजापतिर्वै साम्नेमां जितिमजयत् । यास्येयं जितिः तां स स्वर्गं लोकमारोहत् ॥ ७ ॥

ते देवाः प्रजापतिमुपेत्य अब्रुवन् । अस्मभ्यम् अपि इदं साम प्रयच्छ इति । तथा इति । तदेभ्यः साम प्रायच्छत् ॥ ८ ॥

तदेनानिदं साम स्वर्गं लोकं नाकामयत वोढुम् ॥ ९ ॥

15 ते देवाः प्रजापतिमुपेत्याब्रुवन् । यद्धै नः साम प्रादाः । इदं वै नस्तत् स्वर्गं लोकं न कामयते वोढुम् इति ॥ १० ॥

तद्धै पाप्मना संसृजत इति । कोऽस्य पाप्मा इति । ऋग् इति ।

18 तदृचा समसृजन् ॥ ११ ॥

1. MyL. आसुरा· for असुराः; MyL तद्देवा for तदेवा
2. My आसुराः for असुराः
3. P. ज्येम for जयेम
5. My om. ते पुनः; L. प्रत्याद्रुच्यात्यर्चि for प्रत्याद्रुत्यर्चि.
6. My अनुदन् for अनुदन्त
9. L यदकृते, P. यदमृते यदनूचेन; My यदन्य . (lacuna) वन गायति see CN.
13. My ग्रयच्छेति . . . . lacuna प्रत्.
14. My कामयेत्, L कामयते for अकामयत
16. My सामायते, L. का(सा)मायते for कामयते
18. My सृजन् for समसृजन्

तदिदं प्रजापतेर्गर्हयमाणम् अतिष्ठत् । इदं वै मा तत् पाप्मना संस्राक्षुः इति ॥ १२ ॥

सोऽब्रवीत् । यस्त्वेतेन व्यावर्तयाद् व्येव स पाप्मना वर्ताता इति ॥ १३ ॥

स एतदृचा प्रातःसवने व्यावर्तयति । व्येव स पाप्मना वर्तते ॥ १४ ॥ 5

इति प्रथमेऽध्याये चतुर्थेऽनुवाके द्वितीयः खण्डः

## तृतीयः खण्डः

तदाहुः यद् ओवा ओवा इति गीयते । क्वात्र ऋग् भवति? क्व साम? इति ॥ १ ॥ 10

प्रस्तुवन्नेवाष्टाभिरक्षरैः प्रस्तौति । अष्टाक्षरा गायत्री । अक्षरमक्षरं त्र्यक्षरम् । तच्चतुर्विंशतिः संपद्यन्ते । चतुर्विंशत्यक्षरा गायत्री ॥ २ ॥

तामेतां प्रस्तावेनर्चमाप्त्वा या श्रीर्यापचितिः यः स्वर्गो लोको यद्यशो यदन्नाद्यं तान्यागायमान आस्ते ॥ ३ ॥ 15

इति प्रथमेऽध्याये चतुर्थेऽनुवाके तृतीयः खण्डः

## चतुर्थः खण्डः

प्रजापतिर्देवानसृजत । तान् मृत्युः पाप्मान्वसृज्यत ॥ १ ॥

ते देवाः प्रजापतिमुपेत्याब्रुवन् । कस्मादु नोऽसृष्ठा मृत्युं चेन्नः पाप्मानमन्ववस्रक्ष्यन्नासिथेति ॥ २ ॥ 20

---

2 P. समस्राक्षुः for मस्राक्षु

5. P. व्येव for व्येव

15 My आदत्ते for आस्ते

18. My L. ता for तान्

19. L कस्मा for कस्माद्. My हृष्ठाः. L. सृष्टा for सृष्ठा, L. मृत्युश्चेन्न for मृत्यु चेन्नः.

20. My अन्वहृक्ष्यं, L. अन्ववसृप्टन् for अन्ववस्रक्ष्यन्. see CN.

तानब्रवीत् । छन्दांसि संभरत । तानि यथायतनं प्रविशत । ततो मृत्युना पाप्मना व्यावर्त्स्यथ इति ॥ ३ ॥

वसवो गायत्रीं समभरन् । तां ते प्राविशन् । तान् सा आच्छादयत् ॥ ४ ॥

5 रुद्रास्त्रिष्टुभं समभरन् । तां ते प्राविशन् । तान् सा आच्छादयत् ॥ ५ ॥

आदित्या जगतीं समभरन् । तां ते प्राविशन् । तान् सा आच्छादयत् ॥ ६ ॥

विश्वेदेवा अनुष्टुभं समभरन् । तां ते प्राविशन् । तान् सा

10 आच्छादयत् ॥ ७ ॥

तानस्यामृच्यस्वरायां मृत्युर्निरजानात् । यथा मणौ मणिसूत्रं परिपश्येदेवम् ॥ ८ ॥

ते स्वरं प्राविशन् । तान् स्वरे सतो न निरजानात् । स्वरस्य तु घोषेणान्वैत् ॥ ९ ॥

15 त ओमित्येतदेवाक्षरं समारोहन् । एतदेवाक्षरं त्रयी विद्या । यददोऽमृतं तपति तत् प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥ १० ॥

एवमेवैवं विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तते । अथो यस्यैवं विद्वानुद्गायति ॥ ११ ॥

20 इति प्रथमेऽध्याये चतुर्थेऽनुवाके चतुर्थः खण्डः

॥ प्रथमेऽध्याय चतुर्थोऽनुवाकः समाप्तः ॥

---

1. P. छन्दसि for छन्दांसि; My L. प्रविशन् for प्रविशत
11. My ऋचस्वराय for ऋच्यस्वरायां
13. My ताने for तान्
14. My व्योषेण for घोषेण
15. My समारोहयन् for समारोहन्
16. My यदतो for यददो; My न भवति for तपति
17. My आरुह्य for समारुह्य

## पञ्चमोऽनुवाकः

### प्रथमः खण्डः

अथैतदेकविंश साम ।। १ ।।

तस्य त्र्य्येव विद्या हिंकारः । अग्निर्वायुः असावादित्य एष प्रस्तावः । इम एव लोका आदिः येषु हीदं लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहारः । आपः प्रजा ओषधय एष उपद्रवः । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् । तदेकविंशं साम ।। २ ।।    5

स य एवमेतदेकविंशं साम वेद एतेन हास्य सर्वेणोद्गीतं भवति । एतस्मादु एव सर्वस्माद् आवृश्च्यते । य एवं विद्वांसमुपवदति ।। ३ ।।    10

इति प्रथमेऽध्याये पञ्चमेऽनुवाके प्रथमः खण्डः

।। प्रथमेऽध्याये पञ्चमोऽनुवाकः समाप्तः ।।

---

## षष्ठोऽनुवाकः

### प्रथमः खण्डः

इदमेवेदमग्रे अन्तरिक्षमासीत् । तद्वेवाप्येतर्हि ।। १ ।।    15

तद्यदेतदन्तरिक्षम् । य एवायं पवते एतदेवान्तरिक्षम् । एष ह वा अन्तरिक्षो नाम ।। २ ।।

एष उ एवैष विततः । तद्यथा काष्ठेन पलाशे विष्कब्धे स्याताम् अक्षेण वा चक्रौ एवमेतेन इमौ लोकौ विष्कब्धौ तस्मिन्निदं सर्वमन्तः ।। ३ ।।    20

---

4. My L. add वा before वायुः
5. P. तेषु for येषु
10. MyL. आपृच्छ्यते for आवृश्च्यते, MyL. विद्वान् समुप° for विद्वासमुप°
17. P. अन्तरिक्षनाम for अन्तरिक्षो नाम
18. My विष्टब्धे for विष्कब्धे
19. My विष्टब्धौ for विष्कब्धौ

तद्यदस्मिन्निदं सर्वमन्तः तस्मादन्तर्यक्षम् । अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति परोक्षमाचक्षते ॥ ४ ॥

तद्यथा मूताः प्रबद्धाः प्रलम्बेरन् एव हैतस्मिन् सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ॥ ५ ॥

5 तस्यैतस्य साम्नः तिस्र आगाः । त्रीण्यागीतानि । षड्विभूतयः । चतस्रः प्रतिष्ठाः । दश प्रगाः । सप्त सस्थाः । द्वौ स्तौभौ । एकं रूपम् ॥ ६ ॥

तद्यास्तिस्र आगा इम एव ते लोकाः । अथ यानि [त्रीणि] आगीतानि अग्निर्वायुरसावादित्य एतान्यागीतानि ॥ ७ ॥

10 न ह वै कांचन श्रियमपराध्नोति । य एवं वेद ॥ ८ ॥

इति प्रथमेऽध्याये षष्ठेऽनुवाके प्रथमः खण्डः

## द्वितीयः खण्डः

अथ याः षड्विभूतयः ऋतवस्ते । अथ याश्चतस्र प्रतिष्ठा इमा एव ताश्चतस्रो दिश । अथ ये दश प्रगा इम एव ते दश प्राणाः । अथ

15 याः सप्त सस्था या एवैताः सप्त होत्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः । अथ यौ द्वौ स्तोभावहोरात्रे एव ते । अथ यदेक रूप कर्मैव तत् । कर्मणा हीद सर्वं विक्रियते ॥ १ ॥

तस्यैतस्य साम्नो देवा आजिमायन् । स प्रजापतिर्हरसा हिंकारमुदजयत् । अग्निस्तेजसा प्रस्तावम् । रूपेण बृहस्पतिरुद्गीथम् ।

20 स्वधया पितरः प्रतिहारम् । वीर्येणेन्द्रो निधनम् ॥ २ ॥

अथेतरे देवा अन्तरिता इवासन् । ते इन्द्रमब्रुवन् । तव वै वयं स्मोऽनु न एतस्मिन् सामन्नाभज इति ॥ ३ ॥

---

1. My om. तद्यदस्मिन्निद सर्वमन्त
3 & 4. My प्रबन्धा for प्रबद्धा:
5 My L आगमा for आगा
15. P My सप्ताहोगत्रा; L सप्त होगत्रा for सप्त होत्रा:
19. My L प्रस्तावरूपेण for प्रस्तावम् । रूपेण
22 My om न . My स्वाम for साम

तेभ्यः स्वरं प्रायच्छत् । तं प्रजापतिरब्रवीत् । कथेत्थमकः । सर्वं वा एभ्यः साम प्रादाः । एतावद्वाव साम यावान् स्वरः । ऋग् वा एषर्ते स्वराद् भवतीति ॥ ४ ॥

सोऽब्रवीत् । पुनर्वा अहमेषामेतं रसमादास्य इति ॥ ५ ॥

तानब्रवीदुप मा गायत । अभि मा स्वरत इति ॥ ६ ॥ 5

तथा इति ॥ ७ ॥

तमुपागायन् । तमभ्यस्वरन् । तेषां पुना रसमादत्त ॥ ८ ॥

**इति प्रथमेऽध्याये षष्ठेऽनुवाके द्वितीयः खण्डः**

---

## तृतीयः खण्डः

स यथा मधुधाने मधुनालीभिर्मक्षिकामिञ्चादेवमेव तत्सामन् पुना रसमासिञ्चत् ॥ १ ॥ 10

तस्मादु ह नोपगायेत् । इन्द्र एष यदुद्गाता । स यथामावमीषां रसमादत्त एवमेष तेषां रसमादत्ते ॥ २ ॥

कामं ह तु यजमान उपगायेत् । यजमानस्य हि तद् भवति । अथो ब्रह्मचार्याचार्योक्तः ॥ ३ ॥ 15

तदु वा आहुः । उपैव गायेत् । दिशो ह्युपागायन् । दिशामेव सलोकतां जयतीति ॥ ४ ॥

ते य एवेमे मुख्याः प्राणाः । एत एवोद्गातारश्च उपगातारश्च । इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ॥ ५ ॥ 19

---

1. My अथ एकमेक. for कथेत्थमकः.
3. My एष ते for एषर्ते
4. My आसाद्य for आदास्ये
10. My °वने for °धाने, My °सिञ्च्याद् for °सिञ्चाद्.
13. L. सरसमादत्त for रसमादत्त
16. MyL. °गायत् for °गायन्, MyL. दिशम् for दिशाम्; P. एव for एव

तस्माद् उ चतुर एवोपगातॄन् कुर्वीत । तस्माद् उ होपगातॄन् प्रति अभिमृशेत् । दिशः स्थ । श्रोत्रं मे मा हिंसिष्ट इति ॥ ६ ॥

स यः स रस आसीद् य एवायं पवते एष एव स रसः ॥ ७ ॥

स यथा मध्वालोपमद्यात् । इति ह स्माह सुचित्तः शैलनः ।
5 एवमेतस्य रसस्य आत्मानं पूरयेत । स एवोद्गाता आत्मानं च यजमानं च अमृतत्वं गमयति इति ॥ ८ ॥

**इति प्रथमेऽध्याये षष्ठेऽनुवाके तृतीयः खण्डः**

8 ॥ प्रथमेऽध्याये षष्ठोऽनुवाकः समाप्तः ॥

---

1. My L. उद्गातॄन् for उपगातॄन्.
3. My एव सारसः for एव स रसः.
4. मध्वा लोपम्. see CN.

## सप्तमोऽनुवाकः

### प्रथमः खण्डः

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥ १ ॥

स यः स आकाशो वागेव सा । तस्माद् आकाशाद् वाग् वदति ॥२॥

तामेतां वाचं प्रजापतिरभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । सा त्रयी विद्या [अभवत्] ॥ ३ ॥ 5

[स त्रयीं विद्या]मभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । त एवेमे लोका अभवन् ॥ ४ ॥

स इमाँल्लोकानभ्यपीळयत् । तेषामभिपीळितानां रसः प्रणेदत् । ता एवैता देवता अभवन् । अग्निर्वायुरसावादित्य इति ॥ ५ ॥ 10

स एता देवता अभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । सा त्रयी विद्याभवत् ॥ ६ ॥

स त्रयीं विद्यामभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । ता एता व्याहृतयोऽभवन् । भूर्भुवःसुवरिति ॥ ७ ॥

स एता त्याहृतीरभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । तदेतदक्षरमभवद् । **ओम्** इति यदेतद् ॥ ८ ॥ 15

स एतदक्षरमपीळयत् । तस्याभिपीळितस्य रसः प्राणेदत् । ९ ।

इति प्रथमेऽध्याये सप्तमेऽनुवाके प्रथमः खण्डः 18

---

5. 7, 9 My °विष्टयत् for °पीळयत्;
   5, 7 विष्टितायै for °पीळितायै.
6. P. om. सा त्रयीविद्या....प्राणेदत्. see CN.
7. My L. तस्याभिपीळितस्या (My °विष्टितस्यात) तासामभिपीळितानां for तस्या अभिपीळितायै.
14. PL. स्वर् for सुवर्.

## द्वितीयः खण्डः

तदक्षरदेव । यदक्षरदेव तस्मादक्षरम् ॥ १ ॥

यद्वेव क्षरन्नाक्षीयत तस्मादक्षयम् । अक्षयं ह वै नामैतत् । तद-
क्षरमिति परोक्षमाचक्षते ॥ २ ॥

5　　तद्धैतदेक ओमिति गायन्ति । तत्तथा न गायेत् । ईश्वरो हैनदेतेन
रसेनान्तर्धातोः ॥ ३ ॥

अथो द्वे इवैवं भवत ओमिति । ओ इत्यु हैके गायन्ति । तदु
ह तन्न गीतम् । नो एव तथा गायेत् । ॐ इत्येव गायेत् । तदेनदेतेन
रसेन संदधाति ॥ ४ ॥

10　　तदेतं रसं तर्पयति । रसस्तृप्तोऽक्षरं तर्पयति । अक्षरं तृप्तं
व्याहृतीस्तर्पयति । व्याहृतयस्तृप्ता वेदाँस्तर्पयन्ति । वेदास्तृप्ता देवता-
स्तर्पयन्ति । देवतास्तृप्ता लोकाँस्तर्पयन्ति । लोकास्तृप्ता अक्षरं तर्प-
यन्ति । अक्षरं तृप्तं वाचं तर्पयति । वाक् तृप्ता आकाशं तर्पयति ।
आकाशस्तृप्तः प्रजास्तर्पयति । तृप्यति प्रजया पशुभिर्य एतदेवं वेद ।
15　अथो यस्यैव विद्वानुद्गायति ॥ ५ ॥

प्रथमेऽध्याये सप्तमेऽनुवाके द्वितीयः खण्डः

॥ प्रथमेऽध्याये सप्तमोऽनुवाकः समाप्तः ॥

---

3. L. यन्त्वेवा. My यद्वैवा P. यद्वेवा for यद्वेव
5. P. गायेत for गायेत्.
7. My L. द्वै for द्वे; My ओमित्यु for ओ इत्यु
8. My L तद्विगीतम् for तन्न गीतम्; P. नैव for नो एव; My L ओ for ॐ.
10. My om. अक्षरं तृप्तं . . . वाचं तर्पयति. (L. 13.)

## अष्टमोऽनुवाकः

### प्रथमः खण्डः

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥ १ ॥

स यः स आकाशः आदित्य एव सः । एतस्मिन् ह्युदिते सर्वमिदमाकाशते ॥ २ ॥ 5

तस्य मर्त्यामृतयोर्वैतरणी समुद्र एव । तद्यत्समुद्रेण परिगृहीतं तन्मृत्योराप्तम् । अथ यत्परं तदमृतम् ॥ ३ ॥

स यो ह स समुद्रो य एवायं पवते । एष एव स समुद्रः । एतं हि संद्रवन्तं सर्वाणि भूतानि अनुसंद्रवन्ति ॥ ४ ॥

तस्य द्यावापृथिवी एव रोधसी । अथ यथा नद्यां कसानि वा 10 प्रहीणानि स्युः सरांसि वा एवमस्यायं पार्थिवः स समुद्रः ॥ ५ ॥

स एष पार एव समुद्रस्योदेति । स उद्यन्नेव वायोः पृष्ठ आक्रमते । सोऽमृतादेवोदेति । अमृतमनुसंचरति । अमृते प्रतिनिष्ठतः (ति?) ॥ ६ ॥

तस्यैतत् त्रिवृद्रूपं मृत्योराप्तं शुक्लं कृष्णं पुरुषः ॥ ७ ॥

तद्यच्छुक्लं तद्वाचोरूपम् ऋचोऽग्नेर्मृत्योः । सा या सा वागृक् सा । 15 अथ योऽग्निर्मृत्युः सः ॥ ८ ॥

अथ यत् कृष्णं तदपां रूपम् अन्नस्य मनसो यजुषः । तद्यास्ता आपोऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥ ९ ॥

अथ यः पुरुषः स प्राणः तत्साम तद् ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद् ब्रह्म तदमृतम् ॥ १० ॥ 20

इति प्रथमेऽध्याये अष्टमेऽनुवाके प्रथमः खण्डः

---

4. L om. हि;
5. My. om. इदम्.
6. P वैतीरणि for वैतरणी, My समुद्रेणैव कि गृहीत न for समुद्रेण परिगृहीतं तत्.
10. My L. नद्यक्सानि for नद्यां कंसानि.
11. P. om. स.
13. P प्रनिष्ठित. for प्रतिनिष्ठति.
14. My L. द्रूप for द्रूपं.

## द्वितीयः खण्डः

अथाध्यात्मम् । इदमेव चक्षुस्त्रिवृच्छुक्लं कृष्णं पुरुषः ॥ १ ॥

तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या सा वागृक् सा । अथ योऽग्निर्मृत्युः सः ॥ २ ॥

5 अथ यत् कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । तद्यास्ता आपोऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥ ३ ॥

अथ यः पुरुषः स प्राणः तत् साम तद् ब्रह्म तदमृतम् । स यः प्राणः तत् साम । अथ यद् ब्रह्म तदमृतम् ॥ ४ ॥

सैषोत्क्रान्तिर्ब्रह्मणः । अथातः पराक्रान्तिः । सा या सा क्रान्तिः 10 विद्युदेव सा । स यदेव विद्युतो विद्योतमानायै श्वेतं रूपं भवति तद्वाचो रूपमृचोऽग्नेर्मृत्योः ॥ ५ ॥

यद्वेव विद्युतः संद्रवन्त्यै नीलं रूपं भवति तदपां रूपमन्नस्य मनसो यजुषः ॥ ६ ॥

य एवैष विद्युति पुरुषः स प्राणः तत् साम तद् ब्रह्म तदमृतम् । 15 स यः प्राणः तत् साम । अथ यद् ब्रह्म तदमृतम् ॥ ७ ॥

इति प्रथमेऽध्यायेऽष्टमेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

स हैषोऽमृतेन परिवृढो मृत्युमध्यास्तेऽन्नं कृत्वा ॥ १ ॥

अथैष एव पुरुषो योऽयं चक्षुषि । य आदित्ये सोऽतिपुरुषः । यो 20 विद्युति स परमपुरुषः ॥ २ ॥

---

3. My वाग्रत्साक् L वागृत् सात् for वागृक् सा.
4. My L. सो for सः
9. My क्रान्तिः for उत्क्रान्तिः
10. My विद्युत° for विद्योत°; P. श्येतं, L. श्वैतं for श्वेतं.
12. L. यत्त्वेव, My यद्येव for यद्वेव.
18. My मृतेन for अमृतेन.
19. MyL. चक्षुषी for चक्षुषि; MyL. आदित्यो for आदित्ये.

एते ह वाव त्रयः पुरुषाः । आ हास्यैते जायन्ते ॥ ३ ॥

स योऽयं चक्षुष्येषोऽनुरूपो नाम । अन्वङ् ह्येष सर्वाणि रूपाणि । तमनुरूप इत्युपासीत । अन्वञ्चि हैनं सर्वाणि रूपाणि भवन्ति ॥ ४ ॥

य आदित्ये स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । तं प्रति-रूप इत्युपासीत । प्रत्यञ्चि हैनं सर्वाणि रूपाणि भवन्ति ॥ ५ ॥ 5

यो विद्युति स सर्वरूपः । सर्वाणि ह्येतस्मिन् रूपाणि । तं सर्व-रूप इत्युपासीत । सर्वाणि हास्मिन् रूपाणि भवन्ति ॥ ६ ॥

एते ह वाव त्रयः पुरुषाः । आ हास्यैते जायन्ते । य एतदेवं वेद । यस्यैवं विद्वानुद्गायति ॥ ७ ॥ 9

इति प्रथमेऽध्यायेऽष्टमेऽनुवाके तृतीयः खण्डः

॥ अष्टमोऽनुवाकः समाप्तः ॥

---

2. My अन्वञ्चप्येष· for अन्वङ् ह्येषः

3. L. ह्येनं for हैनं

5 My प्रत्यञ्च for प्रत्यञ्चि.

## नवमोऽनुवाकः

### प्रथमः खण्डः

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ।। १ ।।

स यः स आकाशः इन्द्र एव सः । स यः स इन्द्र एष एव सः । एष
5 एव तपति । स एष सप्तरश्मिर्वृषभस्तुविष्मान् ।। २ ।।

तस्य वाङ्मयो रश्मिः प्राङ् प्रतिष्ठितः । सा या सा वागग्निः
सः । स दशधा भवति । शतधा सहस्रधा अयुतधा प्रयुतधा नियुतधा
अर्बुदधा न्यर्बुदधा निखर्वधा पद्ममक्षितिर्व्योमान्तः ।। ३ ।।

स एष एतस्य रश्मिर्वाग् भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः ।
10 स यः कश्च वदति एतस्यैव रश्मिना वदति ।। ४ ।।

अथ मनोमयो दक्षिणा प्रतिष्ठितः । तद्यत्तन्मनश्चन्द्रमाः सः ।
स दशधा भवति ।। ५ ।।

स एष एतस्य रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः ।
स यः कश्च मनुते एतस्यैव रश्मिना मनुते ।। ६ ।।

15 अथ चक्षुर्मयः प्रत्यङ् प्रतिष्ठितः । तद्यत्तच्चक्षुरादित्यः स
दशधा भवति ।। ७ ।।

स एव एतस्य रश्मिश्चक्षुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः ।
स यः कश्च पश्यति एतस्यैव रश्मिना पश्यति ।। ८ ।।

अथ श्रोत्रमय उदङ् प्रतिष्ठितः । तद् यत्तच्छ्रोत्रं दिशस्ताः ।
20 स दशधा भवति ।। ९ ।।

स एष एतस्य रश्मिः श्रोत्रं भूत्वा सर्वासु आसु प्रजासु प्रत्य-
वस्थितः । स यः कश्च शृणोति एतस्यैव रश्मिना शृणोति ।। १० ।।

23 इति प्रथमेऽध्याये नवमेऽनुवाके प्रथमः खण्डः

---

6. My प्राक् for प्राङ्.
8. My L. निखर्वा च for निखर्वधा; My सोमान्तः for व्योमान्तः
9. My तस्य for एतस्य.
10. My पश्यति L. Supra line पश्यति for वदति; My L. पश्यति for वदति.
11. My adds श्रोत्र before मनो°; My om. तत्.
19. My श्रोत्रं यः for श्रोत्रमयः

## द्वितीयः खण्डः

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः । स यः स प्राणो [illegible] [illegible]यः । स दशधा भवति ॥ १ ॥

स एष एतस्य रश्मिः प्राणो भूत्वा सर्वास्वासु प्रजासु प्र[illegible]स्थितः । स यः कश्च प्राणिति एतस्यैव रश्मिना प्राणिति ॥ २ ॥ 5

अथ असुमयस्तिर्यङ् प्रतिष्ठितः । स ह स ईशानो नाम । स दशधा भवति ॥ ३ ॥

स एष एतस्य रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च असुमान् एतस्यैव रश्मिना असुमान् ॥ ४ ॥

अथ अन्नमयोऽर्वाङ् प्रतिष्ठितः । तद्यत्तदन्नमापस्ताः । स दशधा 10 भवति । सहस्रधा अयुतधा प्रयुतधा नियुतधा अर्बुदधा न्यर्बुदधा निखर्वा च पद्ममक्षितिर्व्योमान्तः ॥ ५ ॥

स एष एतस्य रश्मिरन्नं भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च अश्नाति एतस्यैव रश्मिना अश्नाति ॥ ६ ॥

स एष सप्तरश्मिर्वृषभस्तुविष्मान् । तदेतदृचाभ्यनूच्यते— 15

**यः सप्तरश्मिर्वृषभस्तुविष्मान् अवासृजत् सर्तवे सप्त सिन्धून् ।**
**यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥**

इति ॥ ७ ॥ (ऋ. वे. २. १२. १२)

यः **सप्तरश्मिरिति** । सप्त ह्येते आदित्यस्य रश्मयः । **वृषभ** इति । एष ह्येवासां प्रजानामृषभः । **तुविष्मान्** इति । महीयैवास्यैषा । 20 **अवासृजत् सर्तवे सप्तसिन्धून्** इति । सप्त ह्येते सिन्धवः । तैरिदं सर्वं सितम् । तद्यदेनैरिदं सर्वं सितं तस्मात् सिन्धवः । **यो रौहिणमस्फुरद् वज्रबाहुरिति** । ([illegible] हि रौहिणमस्फुरद् वज्रबाहुः । **द्यामारोहन्तं स जनास इन्द्रः** इति । एष हीन्द्रः ॥ ८ ॥

इति प्रथमेऽध्याये नवमेऽनुवाके द्वितीयः खण्डः 25

---

11. L. निखर्वाचं, My निखर्वोचं for निखर्वा च.

20. महयैवा° My महयैवरे° for महीयैवा°.

23. om. हि.

## तृतीयः खण्डः

तद्यथा **गिरिं पन्थानः समुदियुः** इति ह स्माह शाट्यायनिः । एवमेत आदित्यस्य रश्मयः एतमादित्यं सर्वतो वियन्ति । स हैवं विद्वान् ओमित्याददान एतैरेतस्य रश्मिभिरेतमादित्यं सर्वतोऽभ्येति ॥ १ ॥

5 तदेतत् सर्वतोद्वारमनिषेधं साम । अन्यतोद्वारं हैनदेक एवाभ्रङ्ग-मुपासते । य एतदन्यथा विदुः ॥ २ ॥

अथ य एतदेवं वेद स एवैतत् सर्वतोद्वारमनिषेधं साम वेद ॥ ३ ॥

सा एषा विद्युत् । [यद्] एतन्मण्डलं समन्तं परिपतति तत्साम । अथ यत् परमतिभाति स पुण्यकृत्यायै रसः । तमभ्यतिमुच्यते ॥ ४ ॥

10 तदेतदभ्रातृव्य साम । न ह वा इन्द्रः कंचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यं पश्यते एवमेव न कंचन भ्रातृव्य पश्यते । य एतदेव वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ५ ॥

**इति प्रथमेऽध्याये नवमेऽनुवाके तृतीयः खण्ड.**

14 ॥ नवमोऽनुवाकः समाप्तः ॥

---

3. My ह्यादित्यस्य for आदित्यस्य; P. °ऽपियन्ति, L. °ऽतिप्रतियन्ति for वियन्ति.
5. My अनुष्ठेयं. L. अनुषेधं for अनिषेधं; My त एतावभृङ्गम्, L. हैनत एतावभ्रङ्गम् for हैनदेक एवाभ्रङ्गम्
6. My योऽतोऽन्यथा विदुः, L. एतोऽन्यथा विदुः P. अतोऽन्यथाविद्युः for य एतदन्यथा विदुः See CN.

## दशमोऽनुवाकः

### प्रथमः खण्डः

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥ १ ॥

स यः स आकाश इन्द्र एव सः । स यः स इन्द्रः सामैव तत् ॥२॥

तस्यैतस्य साम्न इयमेव प्राची दिक् हिंकारः । इयं प्रस्तावः । 5
इयमादिः । इयमुद्गीथः । असौ प्रतिहारः । अन्तरिक्षमुपद्रवः । इयमेव निधनम् ॥ ३ ॥

तदेतत् सप्तविधं साम । स य एवमेतत् सप्तविधं साम वेद यत् किंच प्राच्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत् सर्वं हिंकारेणाप्नोति ॥ ४ ॥ 10

अथ यद्दक्षिणायां दिशि तत्सर्वं प्रस्तावेन आप्नोति ॥ ५ ॥

अथ यत् प्रतीच्यां दिशि तत् सर्वमादिना आप्नोति ॥ ६ ॥

अथ यदुदीच्यां दिशि तत् सर्वमुद्गीथेन आप्नोति ॥ ७ ॥

अथ यदमुष्यां दिशि तत् सर्वं प्रतिहारेण आप्नोति ॥ ८ ॥

अथ यदन्तरिक्षे तत् सर्वमुपद्रवेण आप्नोति ॥ ९ ॥ 15

अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत् सर्वं निधनेन आप्नोति ॥ १० ॥

सर्वं हैवास्य आप्तं भवति । सर्वं जितम् । न हास्य कश्चन कामोऽनाप्तो भवति । य एव वेद ॥ ११ ॥

इति प्रथमाध्याये दशमेऽनुवाके प्रथमः खण्डः 20

---

5. My सा किमु for साम्नः
6. My आदिन्यः for आदि.
9. My कामनु देवतायै for या देवता ये; L. om. देवता ये.
11. My L. add अथ यद्दक्षिणाया दिशि तत्सर्वं प्रतिहारेणाप्नोति । before अथ यद्दक्षिणाया.
12. My L. add अमुष्यात् after यत्.
19. after य एव वेद ॥ LP. adds स यद्ध किंच . . . अभ्यनूच्यते as the concluding sentence of this Khanda. see CN.

## द्वितीयः खण्डः

स यद्ध किच किंचैव विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत् स्वतः कुरुते । तदेतदृचाभ्यनूच्यते

**यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।**
**न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥**

इति ॥ १ ॥ (ऋ. वे. ८. ७०. ५; सा. वे. २७८.)

**यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः** इति । यच्छतं द्यावः स्युः शतं भूम्यः ताभ्य एष एवाकाशो ज्यायान् । **न त्वा वज्रिन्त्सहस्रं सूर्या अनु** इति । न ह्येतं सहस्रं च सूर्या अनु ।

**न जातमष्टरोदसी** इति । न ह्येतं जातं च रोदन्ति । इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायान् । एतस्मिन् ह्येवैते अन्तः ॥ २ ॥

स यः स आकाश इन्द्र एव सः । स यः स इन्द्र एष एव स य एष तपति ॥ ३ ॥

स एषोऽभ्राण्यतिमुच्यमान एति । **तद्यथैषोऽ**भ्राण्यतिमुच्यमान एति एवमेव स सर्वस्मात् पाप्मनोऽतिमुच्यमान एति । य एवं वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ४ ॥

इति प्रथमेऽध्याये दशमेऽनुवाके द्वितीयः खण्डः

॥ दशमोऽनुवाकः समाप्तः ॥

---

2. My यस्सः for यद्ध; My ह वतत् for हैव तत्;
8. My श्रीभ्यः for ताभ्यः
10. P. om. च.
11. My वेन्यवैते for ह्येवैते.
17. My अथ यो for अथो.

## एकादशोऽनुवाकः

### प्रथमः खण्डः

त्रिवृत्साम चतुष्पात् । ब्रह्म तृतीयम् । इन्द्रस्तृतीयम् । प्रजापतिस्तृतीयम् । अन्नमेव चतुर्थः पादः ॥ १ ॥

तद् यद् वै ब्रह्म स प्राणः । अथ य इन्द्रः सा वाक् । अथ यः प्रजापतिः तन्मनः । अन्नमेव चतुर्थः पादः ॥ २ ॥ 5

मन एव हिंकारः । वाक् प्रस्तावः । प्राण उद्गीथः । अन्नमेव चतुर्थः पादः ॥ ३ ॥

करोत्येव वाचा । नयति प्राणेन । गमयति मनसा । तदेतद-निरुद्धं यन्मनः । तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥ ४ ॥ 10

अथाधिदैवतम् । चन्द्रमा एव हिंकारः । अग्निः प्रस्तावः । आदित्य उद्गीथः । आप एव चतुर्थः पादः । तद्धि प्रत्यक्षमन्नम् ॥ ५ ॥

वा एता देवता अमावास्यां रात्रिं संयन्ति । चन्द्रमा अमा-वास्या रात्रिमादित्यं प्रविशति । आदित्योऽग्निम् ॥ ६ ॥ 15

तद् यत् संयन्ति तस्मात् साम । स ह वै सामवित् । स साम वेद । य एवं वेद ॥ ७ ॥

तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥ ८ ॥

एष एवादित्यः त्रिवृत् । चतुष्पाद्रश्मयः । मण्डलं पुरुषः । रश्मय एव हिंकारः । तस्मात्ते प्रथमत एव उद्यतस्तायन्ते । मण्डलं प्रस्तावः । पुरुष उद्गीथः । य एता आपोऽन्तः स एव चतुर्थः पादः ॥ ९ ॥ 20

---

3 My. ब्रह्मा for ब्रह्म.

10 P निरुद्धं for अनिरुद्धं.

15. My. अमावास्याया for अमावास्या.

एवमेव चन्द्रमसो रश्मयो मण्डलं पुरुषः । रश्मय एव हिंकारः । मण्डलं प्रस्तावः । पुरुष उद्गीथः । या एता आपोऽन्तः स एव चतुर्थः पादः ॥ १० ॥

चत्वार्यन्यानि चत्वर्यन्यानि । तान्यष्टौ । अष्टाक्षरा गायत्री ।
5 गायत्रं साम । ब्रह्म उ गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवः । तेनो पशव्यम् ॥ ११ ॥

इति प्रथमेऽध्याये एकादशेऽनुवाके प्रथमः खण्डः

## द्वितीयः खण्डः

अथाध्यात्मम् । इदमेव चक्षुस्त्रिवृत् । चतुष्पात् शुक्लम् ।
10 कृष्णं पुरुषः । शुक्लमेव हिंकारः । कृष्णं प्रस्तावः । पुरुष उद्गीथः । या इमा आपोऽन्तः स एव चतुर्थः पादः ॥ १ ॥

इदमादित्यस्यायनम् । इदं चन्द्रमसः । चत्वारीमानि चत्वारीमानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम । ब्रह्म उ गायत्री । तदु ब्रह्माभिसंपद्यते । अष्टाशफाः पशवः । तेनो
15 पशव्यम् ॥ २ ॥

स योऽयं पवते स एष एव प्रजापतिः । तद्वेव साम । तस्याय देवो योऽयं चक्षुषि पुरुषः । स एष आहुतिमतिमत्योत्क्रान्तः ॥ ३ ॥

अथ यावेतौ चन्द्रमा आदित्यश्च यावेतावप्सु दृश्येते एता उ एतयोर्देवौ ॥ ४ ॥

20 यद्ध वा इदमाहुः । देवानां देवा इत्येते ह ते । त एत आहुतिमतिमत्योत्क्रान्ताः ॥ ५ ॥

---

1. My. रस. for रश्मयः
5. My. L. गायत्रं for गायत्री.
9. My. चतुष्पादा for चतुष्पात्.
16. My. तद्वै for तद्वेव.
18. P. om. उ.

तद्ध पृथुर्वैन्यो दिव्यान् व्रात्यान् पप्रच्छ—

**येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः समीचीः ।**

**य आहूतीरत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ॥**

इति ॥ ६ ॥ (अ. वे. १०. ८. ३५)

ते ह प्रत्यूचुः— 5

**इमामेषां पृथिवीं वस्त एकोऽन्तरिक्षं पर्येको बभूव ।**

**दिवमेको ददते यो विधर्ता विश्वा आशाः प्रति रक्ष्यन्त्यन्ये ॥**

इति ॥ ७ ॥ (अ. वे. १०. ८. ३६)

**इमामेषां पृथिवीं वस्त एक** इति । अग्निर्ह सः । **अन्तरिक्षं पर्येको बभूव** इति । वायुर्ह सः । **दिवमेको ददते यो विधर्ता** इति आदित्यो 10 ह सः । **विश्वा आशाः प्रतिरक्षन्ति अन्य** इति । एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति । चन्द्रमा नक्षत्राणीति । ता एताः सामान्ये एव सत्यो व्यूढो अन्नाद्याय ॥ ८ ॥

इति प्रथमेऽध्याये एकादशोऽनुवाके द्वितीयः खण्डः

॥ एकादाशोऽनुवाकः समाप्तः ॥ 15

2. AV. सध्रीची: for समीची

7. AV एषां for एको; AV. एके for अन्ये.

12. P. मामैव, L. सामा एव for सामान्ये. see CN

## द्वादशोऽनुवाकः

### प्रथमः खण्डः

अथैतत् साम । तदाहुः । संवत्सर एव सामेति ॥ १ ॥

तस्य वसन्त एव हिंकारः । तस्मात् पशवो वसन्ता हिंकरिक्रतः
5 समुदायन्ति ॥ २ ॥

ग्रीष्मः प्रस्तावः । अनिरुक्तो वै प्रस्तावः । अनिरुक्त ऋतूनां ग्रीष्मः ॥ ३ ॥

वर्षा उद्गीथः । उदिव वै वर्ष गायति ॥ ४ ॥

शरत् प्रतिहारः । शरदि ह खलु वै भूयिष्ठा ओषधयः
10 पच्यन्ते ॥ ५ ॥

हेमन्तो निधनम् । निधनकृता इव वै हेमन् प्रजा भवन्ति ॥ ६ ॥

तावेतावन्तौ संधत्तः । एतदन्वनन्तः संवत्सरः । तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च । एतदनु ग्रामस्यान्तौ समेतः । एतदनु निष्कस्यान्तौ समेतः । एतदनु अहिर्भोगान् पर्याहृत्य शये ॥ ७ ॥

15 तद् यथा ह वै निष्कः समन्त ग्रीवा अभिपर्यक्त एवमनन्तं साम । स य एवमेतदनन्तं साम वेद अनन्ततामेव जयति ॥ ८ ॥

इति प्रथमेऽध्याये द्वादशेऽनुवाके प्रथमः खण्डः

---

### द्वितीयः खण्डः

अथैतत् पर्जन्ये साम । तस्य पुरोवात एव हिंकारः । अथ
20 यदभ्राणि संप्लावयति स प्रस्तावः । अथ यत् स्तनयति स उद्गीथः । अथ यद् विद्योतते स प्रतिहारः । अथ यद् वर्षति तन्निधनम् ॥ १ ॥

---

4. P हिकरितः for हिकरिक्रत.

11. My om. निधनम्:

15. MyL. निष्क for निष्कः; My. °पर्यत्त° for °पर्यक्त°.

तदेतत् पर्जन्ये साम । स य एवमेतत् पर्जन्ये साम वेद वर्षुको हास्मै पर्जन्यो भवति ।। २ ।।

अथैतत् पुरुषे साम । तस्यायमेव हिंकारः । अयं प्रस्तावः । अयमुद्गीथः । अयं प्रतिहारः । इद निधनम् ।। ३ ।।

तदेतत् पुरुषे साम । स य एवमेतत् पुरुषे साम वेद ऊर्ध्व एव प्रजया पशुभिरारोहन्नेति ।। ४ ।। 5

य उ एनत् प्रत्यवेद ये प्रत्यञ्चो लोकास्तान् जयति । तस्याय-मेव हिकारः । अयं प्रस्ताव. । अयमुद्गीथः । अयं प्रतिहारः । इदं निधनम् । ये प्रत्यञ्चो लोकास्तान् जयति ।। ५ ।।

य उ एनत् तिर्यग्वेद ये तिर्यञ्चो लोकास्तान् जयति । तस्य 10 लौमैव हिंकारः । त्वक् प्रस्तावः । मांसमुद्गीथः । अस्थि प्रतिहारः । मज्जा निधनम् ।। ६ ।।

तस्य त्रीण्याविर्गायति । प्रस्तावं प्रतिहारं निधनम् । तस्मात् पुरुषस्य त्रीण्यस्थीन्याविर्दन्ताश्च द्वयाश्च नखाः । ये तिर्यञ्चो लोकास्तान् जयति ।। ७ ।। 15

य उ एनत् सम्यग्वेद । ये मम्यञ्चो लोकास्तान् जयति । तस्य मन एव हिंकारः । वाक् प्रस्ताव । प्राण उद्गीथः । चक्षुः प्रतिहारः । दिश एव निधनम् । ये सम्यञ्चो लोकास्तान् जयति ।। ८ ।।

अथैतद्देवतासु साम । तस्य वायुरेव हिकार । अग्निः प्रस्तावः । आदित्य उद्गीथ. । चन्द्रमा प्रतिहार । दिश एव निधनम् ।। ९ ।। 20

तदेतद्देवतासु साम । स य एवमेतद्देवतासु साम वेद देवतानामेव सलोकतां जयति ।। १० ।।

इति प्रथमेऽध्याये द्वादशेऽनुवाके द्वितीयः खण्डः 23

---

3. MyL. पुरुपो for पुरुषे.
5 My पुरुपो for पुरुषे
6. MyL. प्रजा, for प्रजया
7 P एनं for एनत्
16 My om तस्य मन एव . जयति

## तृतीयः खण्डः

तस्यैतास्तिस्र आगाः आग्नेय्येका ऐन्द्र्येका वैश्वदेव्येका ॥ १ ॥

सा या मन्द्रा सा आग्नेयी । तया प्रातःसवनस्योद्गेयम् । आग्नेयं वै प्रातःसवनम् । आग्नेयोऽयं लोकः । स्वयागया प्रातःसवनस्युद्गायति ।
5 ऋध्नोतीमं लोकम् ॥ २ ॥

अथ या घोषिण्युपब्दिमती सैन्द्री । तया माध्यंदिनस्य सवनस्योद्गेयम् । ऐन्द्रं वै माध्यंदिनं सवनम् । ऐन्द्रोऽसौ लोकः । स्वयागया माध्यंदिनस्य सवनस्य उद्गायति । ऋध्नोत्यमुं लोकम् ॥ ३ ॥

अथ यां वीङ्ख्यन्निव प्रथयन्निव गायति सा वैश्वदेवी । तया
10 तृतीयसवनस्योद्गेयम् । वैश्वदेवं वै तृतीयसवनम् । वैश्वदेवोऽयमन्तरा लोकः । स्वयागया तृतीयसवनस्योद्गायति । ऋध्नोतीममन्तरा लोकम् ॥ ४ ॥

अथो उच्चा खल्वाहुः । एकयैवागयोद्गेयम् । यदेवास्य मध्यं वच इति । तद् यया वै वाचा व्यायच्छमान उद्गायति तदेवास्य मध्यं
15 वचः । तया वा एतया वाचा सर्वा वाच उपगच्छति । अव्यासिक्तामेकस्थां श्रियमृध्नोति । य एवं वेद ॥ ५ ॥

अथ या क्रौञ्चा सा बार्हस्पत्या । स यो ब्रह्मवर्चसकामः स्यात् स तयोद्गायेत् । तद् ब्रह्म वै बृहस्पतिः । तद्वै ब्रह्मवर्चसमृध्नोति । तथा ह ब्रह्मवर्चसी भवति ॥ ६ ॥
20 अथ ह चैकितानेय एकस्यैव साम्न आगा गायति गायत्रस्यैव । तदनवानं गेयं वै गायत्रं तत्साम्नः । साम्न एवाप्रतिहारादनवानं गेयम् । तत् प्राणो वै गायत्रं । तद् वै प्राणमृध्नोति । तथा ह सर्वमायुरेति ॥ ७ ॥

24 **इति प्रथमेऽध्याये द्वादशेऽनुवाके तृतीयः खण्डः**

---

6. My. om. अथ या . ऋध्नोत्यमु लोकम्.
8. L. इमम् for अमुम्.
9. L. या for या.
20. My. हवै जिना ये कौ कम्मै for चैकितानेय एकस्यैव.
21. P. om. वै गायत्र तत्साम्न:

## चतुर्थः खण्डः

अथ ह ब्रह्मदत्तं चैकितानेयमुद्गायन्तं कुरव उपोदुः । उज्जहिहि साम दाल्भ्य इति ॥ १ ॥

स होपोद्यमानो नितरां जगौ । तं होचुः । किमुपोद्यमानो नितरामगासीः इति ॥ २ ॥ 5

स होवाच । इदं वै लोमेति । एतदेवैतत् प्रत्युपाशृण्मः । तस्मादु ये न उपावादिषुर्लोमशानीव तेषां श्मशानानि भवितारः । अथ वयमु देव गातरः स्म इति ॥ ३ ॥

अथ ह राजा जैवलिर्गळ्नसमार्क्षाकायणं शामूलपर्णाभ्यामुत्थितं पप्रच्छ । ऋचागात शालावत्या३ साम्ना३ इति ॥ ४ ॥ 10

नैव राजन् ऋचेति होवाच न साम्नेति । तद् यूयं तर्हि सर्व एव पणाय्या भविष्यथ य एवं विद्वांसोऽगायतेति ॥ ५ ॥

अथ यद्धाऽवक्ष्यदृचा च साम्ना चागामेति । धीतेन वै तद्यात-याम्नामलाकाण्डेनागतेति हैनांस्तदवक्ष्यत् तद्ध तदुवाच । स्वरेण चैव हिंकारेण चागामेति ॥ ६ ॥ 15

इति प्रथमेऽध्याये द्वादशेऽनुवाके चतुर्थः खण्डः

---

2. L. ब्रह्मदत्त for ब्रह्मदत्त. MyL. उज्जिहि My उज्जिह for उज्जहिहि.
6 MyL. सामेति for लोमेति, P. ˚पशृण्म My ˚पाश्नह्म for पाशृण्म
9. My गट्टिनसामार्क्षकायणः P. गलून. .. for गळूनसमार्क्षाकायणं.
10. P. ˚गाता, My ˚ष्टात for ˚गात. LMy. ˚वत्याट्य साम्नाट्या for ˚वत्या ३ साम्ना ३
12. My. विद्वान् सो˚ for विद्वांसो.
13. My. आगायेति for आगामेति, L. थीतेन My शतेन for धीतेन.
15. My. चागायेति for चागामेति

## पञ्चमः खण्डः

अथ ह सत्याधिकवाकश्चैत्ररथिः सत्ययज्ञं पौलुषितमुवाच प्राचीनयोग्येति । मच्चेद् वै त्वं साम विद्वान् सम्नार्त्विज्यं करिष्यरि नैव तर्हि पुनर्दीक्षामभिध्यातासीति । मुहुर्दीक्षी ह्यास ॥ १ ॥

5 स होवाच । यो वै साम्नः श्रियं विद्वान् साम्नार्त्विज्यं करोति श्रीमानेव भवति । मनो वाव साम्नः श्रीरिति ॥ २ ॥

यो वै साम्नः प्रतिष्ठां विद्वान् साम्नार्त्विज्यं करोति प्रत्येव तिष्ठति । वाग्वाव साम्नः प्रतिष्ठेति ॥ ३ ॥

यो वै साम्नः सुवर्णं विद्वान् साम्नार्त्विज्यं करोति अध्यस्य गृहे 10 सुवर्णं गम्यते । प्राणो वाव साम्नः सुवर्णमिति ॥ ४ ॥

यो वै साम्नोऽपचितिं विद्वान् साम्नार्त्विज्यं करोति अपचिति-मानेव भवति । चक्षुर्वाव साम्नोऽपचितिरिति ॥ ५ ॥

यो वै साम्नः श्रुतिं विद्वान् साम्नार्त्विज्यं करोति श्रुतिमानेव भवति । श्रोत्रं वाव साम्नः श्रुतिरिति ॥ ६ ॥

15 इति प्रथमेऽध्याये द्वादशोऽनुवाके पञ्चमः खण्ड.

॥ द्वादशोऽनुवाकः समाप्तः ॥

---

3. P. °योगेति for °योग्येति; P म[illegible] for मत्.
4. My. °यातासि for ध्यातासि

## त्रयोदशोऽनुवाकः

### प्रथमः खण्डः

**चत्वारि वाक्परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति** 5
**तुरीयं वाचो मनुष्या वदन्ति ॥**

इति ॥ १ ॥ (ऋ. वे. १. १६४. ४५)

वागेव साम । वाचा हि साम गायति । वागेवोक्थम् । वाचा ह्युक्थं शंसति । वागेव यजुः । वाचा हि यजुरनुवर्तते ॥ २ ॥

तद् यत् किंच अर्वाचीनं ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र 10 ब्रह्मोपदिश्यते नैव हि तेनार्त्विज्यं करोति । परोक्षेणैव कृतं भवति ॥ ३ ॥

तस्या एतस्यै वाचो मनः पादश्चक्षुः पादः श्रोत्रं पादः वागेव चतुर्थः पादः ॥ ४ ॥

तद् यद्वै मनसा ध्यायति तद्वाचा वदति । यच्चक्षुषा पश्यति 15 तद्वाचा वदति । यच्छ्रोत्रेण शृणोति तद् वाचा वदति ॥ ५ ॥

तद् यदेतत् सर्व वाचमेवाभिसमयति तस्माद् वागेव साम । स ह वै सामवित् । स साम वेद । य एवं वेद ॥ ६ ॥

तस्या एतस्यै वाचः प्राणा एव स्युः । एषु हीदं सर्वमसूत । एषु हीदं सर्वमसूतेति ॥ ७ ॥ 20

इति प्रथमेऽध्याये त्रयोदशोऽनुवाके प्रथम. खण्डः

---

8. MyL. उक्तं for उक्थं. MyL. वाचं for वाचा.
9. MyL. उक्तं for उक्थं.
10. My ब्राह्मण: for ब्रह्मण:
13. My. तस्य एतस्य for तस्या एतस्यै.
17. L. एवा हि for एवाभि°.
20. P. om. हीदं....असूतेति; My सर्व सूतेति for सर्वमसूतेति.

## द्वितीय खण्डः

तेन हैतेनासुना देवा जीवन्ति । पितरो जीवन्ति । मनुष्या जीवन्ति । पशवो जीवन्ति । गन्धर्वाप्सरसो जीवन्ति । सर्वमिदं जीवति ॥ १ ॥

5 तदाहुर्यदसुनेदं सर्वं जीवति कः साम्नोऽसुरिति । प्राण इति ब्रूयात् । प्राणो ह् वाव साम्नोऽसुः ॥ २ ॥

स एष प्राणो वाचि प्रतिष्ठितो वाग् प्राणे प्रतिष्ठिता । तावेतावेवमन्योन्यस्मिन् प्रतिष्ठितौ । प्रतितिष्ठति य एवं वेद ॥ ३ ॥

तदेतदृचाभ्यनूच्यते—

10 **अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।**
**विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥**
इति ॥ ४ ॥ (ऋ. वे. १. ८९. १०)

**अदितिर्द्यौरदितिरन्तरिक्षम्** इति । एषा वै द्यौः । एषा अन्तरिक्षम् । **अदितिर्माता स पिता स पुत्रः** इति । एषा वै माता ।
15 एषा पिता । एषा पुत्रः । **विश्वेदेवा अदितिः पञ्च जना** इति । ये देवा असुरेभ्यः पूर्वे पञ्च जना आसन्, य एवासावादित्ये पुरुषः, यश्चन्द्रमसि, यो विद्युति, योऽप्सु, योऽयमक्षन्नन्तः एष एव ते । तदेषैव । **अदितिर्जातमदितिर्जनित्वम्** इति । एषा ह्येव जातम् । एषा जनित्वम् ॥ ५ ॥

20 इति प्रथमेऽध्याये त्रयोदशेऽनुवाके द्वितीयः खण्डः

॥ त्रयोदशोऽनुवाकः समाप्तः ॥

---

10. My. om. अदितिर्द्यौ° . जनित्वम् ॥ इति.
15. L My. एष पिता । एष पुत्र for एषा . . .
18. My. एषा ह्येवमेष जाता जनित्वम् for एषैव . . . जनित्वम्

## चतुर्दशोऽनुवाकः

### प्रथमः खण्डः

आरुणिर्ह वासिष्ठं चैकितानेयं ब्रह्मवर्चसमुपेयाय। तं होवाच। आजानासि सौम्य गौतम यदिदं वयं चैकितानेयाः सामैवोपास्महे इति। कां त्वं देवतामुपास्से इति । सामैव भगव इति होवाच ॥ १ ॥ 5

तं ह पप्रच्छ । यदग्नौ तद् वेत्था३ इति । ज्योतिर्वा एतत्तस्य साम्नो यद्वयं सामोपास्महे इति ॥ २ ॥

यत् पृथिव्यां तद् वेत्था३ इति। प्रतिष्ठा वा एषा तस्य साम्नो यद् वयं सामोपास्महे इति ॥ ३ ॥

यदप्सु तद् वेत्था३ इति । शान्तिर्वा एषा तस्य साम्नो यद् वयं 10 सामोपास्महे इति ॥ ४ ॥

यदन्तरिक्षे तद् वेत्था३ इति । आत्मा वा एष तस्य साम्नो यद् वयं सामोपास्महे इति ॥ ५ ॥

यद् वायौ तद् वेत्था३ इति। श्रीर्वा एषा तस्य साम्नो यद् वयं सामोपास्महे इति ॥ ६ ॥ 15

यद्दिक्षु तद् वेत्था३ इति । व्याप्तिर्वा एषा तस्य साम्नो यद् वयं सामोपास्महे इति ॥ ७ ॥

यद् दिवि तद् वेत्था३ इति। विभूतिर्वा एषा तस्य साम्नो यद् वयं सामोपास्महे इति ॥ ८ ॥

**इति प्रथमेऽध्याये चतुर्दशेऽनुवाके प्रथमः खण्डः** 20

---

3. I. °चर्यं for °वर्चसम्.
4. P. om. इति.
5. L. भगवत° P. भगवन्त° for भगव.
6. L. ता for तं.
7. MyL.साम्नोप° for सामोप°; MyLI. after सामोपास्महे इति add यदन्तरिक्षं तद्वेत्था ३ इति । आत्मा एष तस्य साम्नो यद्वयं सामोपास्महे इति ।
10. L. एतस्य for तस्य.

## द्वितीयः खण्ड :

यदादित्ये तद् वेत्था३ इति । तेजो वा एतत् तस्य साम्नो यद् वयं सामोपास्महे ॥ १ ॥

यच्चन्द्रमसि तद् वेत्था३ इति । भा वा एषा तस्य साम्नो यद्वयं सामोपास्महे इति ॥ २ ॥

यन्नक्षत्रेषु तद्वेत्था३ इति । प्रज्ञा वा एषा तस्य साम्नो यद्वयं सामोपास्महे इति ॥ ३ ॥

यदन्ने तद्वेत्था३ इति । रेतो वा एतत्तस्य साम्नो यद्वयं सामोपास्महे इति ॥ ४ ॥

यत् पशुषु तद्वेत्था३ इति । यशो वा एतत्तस्य साम्नो यद्वयं सामोपास्महे इति ॥ ५ ॥

यद् ऋचि तद्वेत्था३ इति । स्तोमो वा एष तस्य साम्नो यद्वय सामोपास्महे इति ॥ ६ ॥

यद् यजुषि तद्वेत्था३ इति । कर्म वा एतत्तस्य साम्नो यद्वय सामोपास्महे इति ॥ ७ ॥

अथ किं उपास्से इति । अक्षरमिति । कतमत् तदक्षरमिति । यत् क्षरन्नाक्षीयतेति । कतमत् तत्क्षरन्नाक्षीयतेति । इन्द्र इति ॥ ८ ॥

कतमः स इन्द्र इति । योऽक्षन् रमत इति । कतमः स योऽक्षन् रमत इति । इयं देवतेति होवाच ॥ ९ ॥

योऽयं चक्षुषि पुरुषः एष इन्द्रः । एष प्रजापतिः । समः पृथिव्या समः आकाशेन समो दिवा समः सर्वेण भूतेन । एष परो दिव्रो दीप्यते । एष एवेदं सर्वम् इत्युपासितव्यम् ॥ १० ॥

---

17. My. यत् क्षारं for यत् क्षरत्, LMyI. तदक्षरं ना° for तत् क्षरन्ना°

18 L. योऽक्ष इन्द्रमत for योऽक्षन् रमत.

22. MyL. °सितव्यः for °सितव्यम्.

स य एतदेवं वेद । ज्योतिष्मान् प्रतिष्ठावान् शान्तिमान् आत्मवान् श्रीमान् व्याप्तिमान् विभूतिमान् तेजस्वी भावान् प्रज्ञावान् रेतस्वी यशस्वी स्तोमवान् कर्मवान् अक्षरवान् इन्द्रियवान् सामन्वी भवति ॥ ११ ॥

इति प्रथमेऽध्याये चतुर्दशोऽनुवाके द्वितीयः खण्डः 5

---

## तृतीयः खण्डः

तदेतदृचाभ्यनूच्यते–

**रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।**

**इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादश ॥**

इति ॥ १ ॥ 10

**रूपं रूपं प्रतिरूपो बभूव** इति । रूपंरूपं ह्येष प्रतिरूपो बभूव । **तदस्य रूपं प्रतिचक्षणायेति** । प्रतिचक्षणाय ह्यस्यैतद्रूपम् । **इन्द्रो मायाभिः पुरुरूप ईयते** इति । मायाभिर्ह्येष एतत्पुरुरूप ईयते । **युक्ता ह्यस्य हरयः शतादश** इति । सहस्रं हैत आदित्यस्य रश्मयः । तेऽस्य युक्तास्तैरिदं सर्वं हरति । तद् यदेतैरिदं सर्वं हरति तस्माद्धरयः ॥ ३ ॥ 15

**रूपं रूपं मघवा बोभवीति मायाः कृण्वानाः परितन्वं स्वाम् ।**

**त्रिर्यद् दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा ॥**

इति ॥ ३ ॥

**रूपंरूपं मघवा बोभवीति** । रूपंरूपं ह्येष मघवा बोभवीति । **मायाः कृण्वानः परितन्वं स्वाम्** इति । मायाभिर्ह्येष एतत्स्वां तनुं 20 गोपायति । **त्रिर्यद् दिवः परि मुहूर्तमागात्** इति । त्रिर्ह वा एष एतस्य मुहुर्तस्य इमां पृथिवीं समन्तः पर्येति इमाः प्रजाः सञ्चक्षाणः । **स्वैर्मन्त्रैरनृतुपा ऋतावा** इति । अनृतुपा ह्येष एतदृतावा ॥ ४ ॥

इति प्रथमेऽध्याये चतुर्दशोऽनुवाके तृतीयः खण्डः 24

---

7 MyLP includes तदेतदृचाभ्यनूच्यते in khanda 2 as the concluding sentence. see CN

23 My तद् for एतद्

## चतुर्थः खण्डः

तद्ध पृथुर्वैन्यो दिव्यान् व्रात्यान् पप्रच्छ–

**इन्द्रमुक्थमृचमूद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम् ।**

**मनो वा चक्षुरपानमाहुः श्रोत्रं श्रोत्रिया बहुधा वदन्ति ॥**

5 इति ॥ १ ॥

ते ह प्रत्यूचुः–

**ऋषय एते मन्त्रकृतः पुराजाः पुनराजायन्ते देवानां गुप्त्यैकम् ।**

**ते वै विद्वांसो वैन्य तद्वदन्ति समानं पुरुषं बहुधा निविष्टम् ॥**

इति ॥ २ ॥

10 इमां ह वा तद्देवतां त्रय्या विद्यया मीमांसमाना अभ्येक आपयन्ति नैके । यो ह वावैतदेवं वेद स एवैतां देवतां संप्रति वेद ॥ ३ ॥

स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथः आगच्छति नैवोद्गातुश्चोपगातृणां च विज्ञायते । इत एवोर्ध्वः स्वर उदेति । स उपरि मूर्ध्नो लेलायति ॥ ४ ॥

15 स विद्यादगमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥ ५ ॥

तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यं पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यं पश्यते एवमेव न कंचन भ्रातृव्यं पश्यते । य एवं वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ६ ॥

20 इति प्रथमेऽध्याये चतुर्दशेऽनुवाके चतुर्थः खण्डः

॥ चतुर्दशोऽनुवाकः समाप्तः ॥

---

4. I. वाचं for वा.
6. P. om. ह.
10. L. वाव for वा; P त्रय्या विद्यायाम् इमा समानाम्. for त्रय्या विद्यया मीमासमाना.
13. P स्वर् for स्वर.
19. I. adds एतद् before एव, My अथ यो after अथो

## पञ्चदशोऽनुवाकः

### प्रथमः खण्डः

प्रजापतिर्वाविदमग्र आसीत् । सोऽकामयत । बहु स्याम् । प्रजायेय । भूमानं गच्छेयम् इति ॥ १ ॥

स षोडशधात्मानं व्यकुरुत । भद्रं च समाप्तिश्च आभूतिश्च संभूतिश्च भूतं च सर्वं च रूपं च अपरिमितं च श्रीश्च यशश्च नाम चाग्रं च सजाताश्च पयश्च महीया च रसश्च ॥ २ ॥ 5

तद्यद् भद्रं हृदयमस्य तत् । ततः संवत्सरमसृजत । तदस्य संवत्सरोऽनूपतिष्ठते ॥ ३ ॥

समाप्तिः कर्मास्य तत् । [तत्] कर्मणा हि समाप्नोति । तत ऋतूनसृजत । तदस्यर्तवोऽनूपतिष्ठन्ते ॥ ४ ॥ 10

आभूतिरन्नमस्य तत् । तदञ्चर्धा (तच्चतुर्धा?) भवति । ततो मासानर्धमासानहोरात्राण्युपसोऽसृजत । तदस्य मासा अर्धमासा अहोरात्राण्युपसोऽनूपतिष्ठन्ते ॥ ५ ॥

संभूती रेतोऽस्य तद् । तद् रेतसो हि संभवति ॥ ६ ॥ 15

इति प्रथमेऽध्याये पञ्चदशोऽनुवाके प्रथमः खण्डः

---

### द्वितीयः खण्डः

ततश्चन्द्रमसमसृजत । तदस्य चन्द्रमा अनूपतिष्ठते । तस्मात् स रेतसः प्रतिरूपः ॥ १ ॥

भूतं प्राणोऽस्य सः । ततो वायुमसृजत । तदस्य वायुरनूपतिष्ठते ॥ २ ॥ 20

---

3. P MyLl. वा वेद for वा वेदम् see CN.
6. My साम for नाम
7. MyL. महीया for महीया.
8. L repeats भद्र
12. Myl. अन्नमस्यति तदन्वध्या, L अन्नमस्यत तदञ्चर्धा, P. अन्नमस्य तत् । (तच्) चतुर्धा for अन्नमस्य . see CN.
20. L भूतप्राणस्य My भूत प्राणस्य for भूत प्राणोऽस्य.

सर्वमपानोऽस्य सः । ततः पशूनसृजत । तदस्य पशवोऽनू-
पतिष्ठन्ते ॥ ३ ॥

रूपं व्यानोऽस्य सः । ततः प्रजा असृजत । तदस्य प्रजा
अनूपतिष्ठन्ते । तस्मादासु प्रजासु रूपाण्यधिगम्यन्ते ॥ ४ ॥

5 अपरिमितं मनोऽस्य तत् । ततो दिशोऽसृजत । तदस्य दिशोऽ-
नूपतिष्ठन्ते । तस्मात्ता अपरिमिताः । अपरिमितमिव हि मनः॥ ५ ॥

श्रीर्वागस्य सा । ततः समुद्रमसृजत । तदस्य समुद्रोऽनू-
पतिष्ठते ॥ ६ ॥

यशस्तपोऽस्य तत् । ततोऽग्निमसृजत । तदस्याग्निरनूपतिष्ठते ।
10 तस्मात् स मथितादिव सतप्तादिव जायते ॥ ७ ॥

**इति प्रथमेऽध्याये पञ्चदशोऽनुवाके द्वितीयः खण्ड.**

---

## तृतीयः खण्डः

नाम चक्षुरस्य तत् । तत आदित्यमसृजत । तदस्यादि-
त्योऽनूपतिष्ठते ॥ १ ॥

15 अग्रं मूर्धास्य सः। ततो दिवमसृजत। तदस्य द्यौरनूपतिष्ठते ॥२॥

सजाता अङ्गान्यस्य तानि । अङ्गैर्हि सह जायते । ततो
वनस्पतीनसृजत । तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥ ३ ॥

पयो लोमान्यस्य तानि । तत ओषधीरसृजत । तदस्यौषध-
योऽनूपतिष्ठन्ते ॥ ४ ॥

20 महीया मांसान्यस्य तानि । मांसैर्हि सह महीयते । ततो
वयांस्यसृजत । तदस्य वयांस्यनूपतिष्ठन्ते । तस्मात् तानि प्रपतिष्णूनीव
22 महीमांसानि ॥ ५ ॥

---

9 I. अतप्यत for तपोऽस्य तत्; I. om अनु
13. नाम चक्षुरस्य तत् see CN.
18 Myl. om लोमान्यस्य ..वयाम्यनूपनिग्ठन्ते. (L. 21)
20 L. मभिया for महीया.
22. P. महा My महि for मही.

रसो मज्जास्य सः । ततः पृथिवीमसृजत । तदस्य पृथिव्यनू-
पतिष्ठते ॥ ६ ॥

स हैवं षोडशधात्मानं विकृत्य सार्धं समैत् । तद्यत्सार्धं समैत्
तत्साम्नः सामत्वम् ॥ ७ ॥

स एवैष हिरण्मयः पुरुषः उदतिष्ठत् प्रजानां जनयिता ॥ ८ ॥ 5

**इति प्रथमेऽध्याये पञ्चदशोऽनुवाके तृतीयः खण्डः**

---

## चतुर्थः खण्डः

देवासुरा अस्पर्धन्त । ते देवाः प्रजापतिमुपाधावन् । जया-
मासुरानिति ॥ १ ॥

सोऽब्रवीन्न वै मां यूयं वित्थ नासुराः । यद्वै मां यूयं विद्यात । 10
ततो वै यूयमेव स्यात । परासुरा भवेयुरिति ॥ २ ॥

तद् वै ब्रूहीत्यब्रुवन् । सोऽब्रवीत् । पुरुषः प्रजापतिः सामेति
मोपाध्वम् । ततो वै यूयमेव भविप्यथ परासुरा भविष्यन्तीति ॥ ३ ॥

त पुरुषः प्रजापतिः सामेत्युपासत । ततो वै देवाः अभवन्
परासुराः । स यो हैवं विद्वान् पुरुषः प्रजापतिः सामेत्युपास्ते भवत्या- 15
त्मना परास्य द्विपन् भ्रातृव्यो भवति ॥ ४ ॥

**इति प्रथमेऽध्याये पञ्चदशोऽनुवाके चतुर्थः खण्डः**

॥ पञ्चदशोऽनुवाकः समाप्तः ॥ 18

---

3. Myl. om तद्यत्सार्धं समैत्; L. समैतत् for समैत्.

5. P. जनिता L. जयिता for जनयिता.

14. L. °पास्त for °पासत.

15. Myl. after स यो adds. देवा वै विजिग्यान[ाअ]ब्रुवन् । द्वितीयं करवामहै । मा द्वितीया भूमेति । तेऽब्रुवन् । सामैव द्वितीयं करवामहै । सामैव नो द्वितीय-मस्त्विति । ता इमे द्यावापृथिवी अब्रुवन् समेतं माम प्रजनयनमिति । सासावम्या-वीभत्सन । सा अब्रवीत् बहु वा एतस्या किन्न कुर्वन्ति अधिष्ठीवन्त्यधिच[र]न्त्यध्यासते पुनीनन्वनाव (1)

16 P द्विपन् for विद्वान्

## षोडशोऽनुवाकः

### प्रथमः खण्डः

देवा वै विजिग्याना अब्रुवन् द्वितीयं करवामहै । मा द्वितीया भूमेति । तेऽब्रुवन् सामैव द्वितीयं करवामहै । सामैव नो द्वितीय-
5 मस्त्विति ।। १ ।।

त इमे द्यावापृथिवी अब्रुवन् समेतं साम प्रजनयतमिति ।। २ ।।

सोऽसावस्या अबीभत्सत । सोऽब्रवीद्बहु वा एतस्यां किंच किंच कुर्वन्त्यधिष्ठीवन्त्यधिचरन्त्यध्यासते । पुनीत न्वेनामपूता वा इति ।। ३ ।।

ते गाथामब्रुवन् । त्वया पुनामेति । किं ततः स्याद् इति ।
10 शतसनिः स्या इति । तथेति । ते गाथयापुनन् । तस्मादुत गाथया शतं सुनोति ।। ४ ।।

ते कुम्ब्यामब्रुवन् । त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते कुम्ब्ययापुनन् । तस्मादुत कुम्ब्यया शतं सुनोति ।। ५ ।।

15 ते नाराशसीमब्रुवन् । त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते नाराशंस्यापुनन् । तस्मादुत नाराशंस्या शतं सुनोति ।। ६ ।।

ते रैभीमब्रुवन् । त्वया पुनामेति । किं ततः स्यादिति । शतसनिः स्या इति । तथेति । ते रैभ्यापुनन् । तस्मादुत रैभ्या
20 शतं सुनोति ।। ७ ।।

सेयं पूताथ अमुमब्रवीत् । बहु वै किंच किंच पुमांश्चरति । त्वमनु पुनीष्वेति ।। ८ ।।

23 इति प्रथमेऽध्याये षोडशेऽनुवाके प्रथमः खण्डः

---

3. My. विजिज्ञाना for विजिग्याना.
7. My L. सासावस्या . . साब्रवीत् for सोऽसा° . . . . सोऽब्रवीत्.
10. MyI. स्यात् for स्या, My L. °शनि for °सनिः everywhere.
13 My. om. शतशनिः स्या इति; MyL कुम्ब्याया ... कुम्ब्याया for कुम्ब्यया . . . कुम्ब्यया.

## द्वितीयः खण्डः

स ऐलबेनापुनीत । पूतानि ह वा अस्य मामानि । पूता ऋचः । पूतानि यजूंषि । पूतमनूक्तम् । पूत सर्व भवति । य एवं वेद ॥ १ ॥

ते समेत्य साम प्राजनयताम् । तद् यत् समेत्य साम प्राजनयतां तत्साम्नः सामत्वम् ॥ २ ॥ 5

तदिदं साम सृष्टम् अद उत्क्रम्य लेलायदतिष्ठत् । तस्य सर्वे देवा ममत्विन आसन् । मम ममेति ॥ ३ ॥

तेऽब्रुवन् वीदं भजामहा इति । तस्य विभागेन समपादयन् । तान् प्रजापतिरब्रवीत् । अपेत मम वा एतत् । अहमेव वो विभक्ष्यामीति ॥ ४ ॥ 10

सोऽग्निमब्रवीत् । त्व वै मे ज्येष्ठः पुत्राणामसि । त्वं प्रथमो वृणीष्वेति ॥ ५ ॥

सोऽब्रवीन्मन्द्रं साम्नो वृणेऽन्नाद्यम् इति । स य एतद् गायादन्नाद एव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तमुपवदादिति ॥ ६ ॥ 15

अथ इन्द्रमब्रवीत् । त्वमनुवृणीष्वेति ॥ ७ ॥

सोऽब्रवीद् । उग्रं साम्नो वृणे श्रियम् इति । स य एतद् गायाच्छ्रीमानेव सोऽसत् मामु स देवानामृच्छाद्य एवं विद्वांसमेतद्गायन्तम् उपवदादिति ॥ ८ ॥

अथ सोममब्रवीत् । त्वमनु वृणीष्वेति ॥ ९ ॥ 20

सोऽब्रवीद् वल्गु साम्नो वृणे प्रियम् इति । स य एतद् गायान् प्रिय एव स कीर्तेः । प्रियश्चक्षुपः । प्रियः सर्वेपाममत् । मामु स देवानामृच्छाद्य एवं विद्वांसमेतद् गायन्तमुपवदादिति ॥ १० ॥ 23

---

2 My ममोल्वैना, L ऐल्वेना for ऐल्बेना', My पूनानीह for पूतानि ह; My om सामानि पूना ऋच ..नद् यत् समेत्य साम (L. 4)

4 MyLI प्रजनयनाम् for प्राजनयताम्

8. My वीनं, L वीदा for वीद

11. L प्रथमे for प्रथमो.

13 MyI om. अन्नाद्यम् इति । . .साम्नो वृणे (L. 17)

अथ बृहस्पतिमब्रवीत् । त्वमनुवृणीष्वेति ।। ११ ।।

सोऽब्रवीत् । क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति । स य एतद् गायाद् ब्रह्मवर्चस्येव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वांसमेतद् गायन्तमुपवदादिति ।। १२ ।।

5 इति प्रथमेऽध्याये षोडशोऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

अथ विश्वान् देवान् अब्रवीद् यूयमनु वृणीध्वम् इति ।। १ ।।

तेऽब्रुवन् वैश्वदेव साम्नो वृणीमहे प्रजननमिति । स य एतद् गायात् प्रजावानेव सोऽसदस्मानु देवानामृच्छाद्य एवं विद्वांसमेतद्
10 गायन्तमुपवदादिति ।। २ ।।

अथ पशूनब्रवीद् । यूयमनुवृणीध्वम् इति ।। ३ ।।

तेऽब्रुवन् वायुर्वा अस्माकमीशे । स एव नो वरिष्यत इति । ते वायुश्च पशवश्चाब्रुवन् । अनिरुक्त साम्नो वृणीमहे पशव्यमिति । स य एतद् गायात् पशुमानेव सोऽसदस्मानु च स वायुं च देवानामृ-
15 च्छाद्य एवं विद्वांसमेतद् गायन्तमुपवदादिति ।। ४ ।।

अथ प्रजापतिरब्रवीत् । अहमनुवरिष्य इति ।। ५ ।।

सोऽब्रवीद् । अनिरुक्तं साम्नो वृणे स्वर्ग्यमिति । स य एतद् गायात् स्वर्गलोक एव सोऽसत् । मामु स देवानामृच्छाद्य एवं विद्वांसमेतद् गायन्तमुपवदादिति ।। ६ ।।

20 अथ वरुणमब्रवीत् । त्वमनुवृणीष्वेति ।। ७ ।।

---

1. My. बृहस्पतिः for बृहस्पतिम्; MyI. adds. वल्गु साम्नो वृणे प्रियमिति after अब्रवीत्.
9 I. before देवानाम् adds· च वायुं च.
14 MyL. वायुश्च for वायु च.
16. MyLi ˆवरिष्यति for ˆवरिष्य इति.
17. MyL. स्वर्गम् for स्वर्ग्यम्.

सोऽब्रवीद्। यद्वो न कश्चनावृत तदहं परिहरिप्य इति। किमिति।
अपध्वान्तं साम्नो वृणे अपशव्यमिति । स य एतद् गायादपशुरेव
सोऽसत् । मामु स देवानामृच्छाद्य एतद् गायादिति ॥ ८ ॥

तानि वा एतान्यष्टौ गीतागीतानि साम्नः । इमान्यु ह वै सप्त
गीतानि । अथेयमेव वारुण्यागागीता ॥ ९ ॥ 5

स यां ह कां चैवं विद्वानेतासां सप्तानामागाना गायति ।
गीतमेवास्य भवति । एतानु कामान् राध्नोति य एतामु कामाः ।
अथेमामेव वारुणीमागां नागायेत् ॥ १० ॥

इति प्रथमेऽध्याये षोडशेऽनुवाके तृतीयः खण्डः

॥ प्रथमेऽध्याये षोडशोऽनुवाकः समाप्तः ॥ 10

1. My. ॑व्रन for ॑वृन, MyI वरिप्यन. L. परिहृप्यत for परिहरिप्य.
2. My. अपध्मात्त. L. अपद्धमान for अपध्वान्तं
7. My. कामामि वृध्नोनि I कामानि ऋध्नोनि, L. कामं निर्ऋध्नोति for कामान् राध्नोति

## सप्तदशोऽनुवाकः

### प्रथमः खण्डः

द्वयं वावेदमग्र आसीत् सच्चैवासच्च ॥ १ ॥

तयोर्यत् सत् तत् साम तन्मनः स प्राणः । अथ यदसत् सम्यक्
5 (सेयमृक्?) सा वाक् सोऽपानः ॥ २ ॥

तद् यन्मनश्च प्राणश्च तत्समानम् । अथ या वाक् चापानश्च तत्समानम् । इदमायतन मनश्च प्राणश्चेदमायनतं वाक् चापानश्च । तस्मात् पुमान् दक्षिणतो योषामुपशेते ॥ ३ ॥

सेयमृगस्मिन् सामन् मिथुनमैच्छत । तामपृच्छत् । का
10 त्वमसीति । साहमस्मीति अब्रवीत् । अथवा अहममोऽस्मीति ॥ ४ ॥

तद् यत् सा चामश्च तत् सामाभवत् । तत् साम्नः सामत्वम् ॥५॥

तौ वै संभवावेति । नेत्यब्रवीत् । स्वसा वै त्वं मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ॥ ६ ॥

साब्रवीत् । न वै त विन्दामि येन सभवेयम् । त्वयैव संभवा-
15 नीति । सा वै पुनीष्वेत्यब्रवीत् । अपूता वा असीति ॥ ७ ॥

सापुनीत यदिदं विप्रा वदन्ति तेन । साब्रवीत् । क्वेदं भविष्यतीति । प्रत्यूहे[इ]त्यब्रवीत् । धीर्वा एषा । प्रजाना जीवनं वा एतद् भविष्यतीति । तथेति । तत् प्रत्यौहत् । तस्मादेषा धीरेव प्रजानां
19 जीवनमेव ॥ ८ ॥

---

4. P सर्कं, L. स ऋ(म्य)क् see CN.; My Ll. ins. अस्म्यदद्य भवितेति after सम्यक्.
7. MyL. ॰मायतना for ॰मायतनं.
15. L. after असीति add. वा
16. MyL. रिप्रा for विप्रा; MyL त्वेद for क्वेद.
18. P प्रत्यौहृत My. प्रत्याहृ for प्रत्यौहृत्.
19. L. adds. उ after जीवनम्.

पुनीष्वेत्यब्रवीत् । सापुनीत गाथया । सापुनीत कुम्ब्यया । सापुनीत नाराशंस्या । सापुनीत पुराणेतिहासेन । सापुनीत यदिदमादाय नागायन्ति तेन ॥ ९ ॥

साब्रवीत् । क्वेदं भविष्यतीति । प्रत्यूहे[इ]त्यब्रवीत् । धीर्वा एषा । प्रजानां जीवन वा एतद् भविष्यतीति । तथेति । तत् प्रत्यौहत् । 5 तस्मादेषा धीरु एव प्रजाना जीवनमु एव ॥ १० ॥

सा पुनीष्वैवेत्यब्रवीत् ॥ ११ ॥

इति प्रथमेऽध्याये सप्तदशेऽनुवाके प्रथमः खण्ड·

---

## द्वितीयः खण्डः

सा मधुनापुनीत । तस्मादुत ब्रह्मचारी मधु नाश्नीयाद् स वेदस्य 10 पलाव इति । कामं ह तु आचार्यदत्तमश्नीयात् ॥ १ ॥

अथर्क् सामाब्रवीत् । बहु वै किंच किंच पुमांश्चरनि । त्वमनुपुनीष्वेति । स भरुण्डकेष्णेनापुनीत । पूनानि ह वा अस्य सामानि । पूता ऋचः । पूतानि यजूंषि । पूतमनूक्तम् । पूत मर्व भवति य एवं वेद ॥ २ ॥ 15

ताभ्या सदो मिथुनाय पर्यश्रयन् । नस्मादुपवसथीयां रात्रि सदसि न शयीत । अत्र ह्येतावृक्सामे उपवसथीया रात्रि सदसि संभवतः । स यथा श्रेयस उपद्रष्टा एव हि शश्वदीश्वरोऽनुलब्धः पराभवितो. ॥ ३ ॥

अथ आहु· । उद्गातुर्वै मुखे सभवतः। उद्गातुरेव मुखं नेक्षेनेति ॥४॥ 20

---

1. My कुम्भ्या for कुम्ब्यया.
10. L repeats सा मधुनापुनीत, PL om न.
11. I. पला for पलाव ; My कामाह् तु for कामं ह तु.
13. P भरण्ड° for भरुण्ड°
16. My. उपवम्नशीया for उपवसथीया.
17. My. नयेत for न शयीत, My. उपवम्नशीयां for उपवमथीया
18. My LI नु नुलब· for °नुलब्ध
20. P. om. वै.

तदु वा आहुः । काममेवोद्गातुर्मुखमीक्षेत । उपवसथीयामेवैतां रात्रिं सदसि न शयीत । अत्र ह्येवैतावृक्सामे उपवसथीयां रात्रिं सदसि संभवत इति ॥ ५ ॥

तां संभविष्यन्नाह अमोऽहमस्मि सा त्वम् । सा त्वम् असि
5 अमोऽहम् । सा मामनुव्रता भूत्वा प्रजाः प्रजनयावहै । एहि संभवावहा इति ॥ ६ ॥

तां संभवन्नत्यरिच्यत । सोऽब्रवीत् । न वै त्वानुभवामि । विराड् भूत्वा प्रजनयावेति । तथेति ॥ ७ ॥

तौ विराड् भूत्वा प्राजनयताम् । हिंकारश्च आहावश्च प्रस्तावश्च
10 प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्च उत्तमा च निधनं च वषट्कारश्च एवं विराड् भूत्वा प्राजनयताम् । ते अमुमजनयतां योऽसौ तपति । ते व्यद्रवताम् ॥ ८ ॥

इति प्रथमेऽध्याये सप्तदशोऽनुवाके द्वितीयः खण्डः

## तृतीयः खण्डः

15 मदध्यभू३न्मदध्यभू३दिति । तस्मादाहुर्मधुपुत्रा इति ॥ १ ॥

तास्मादुत स्त्रियो मधु नाश्नन्ति । पुत्राणामिदं व्रतं चराम इति वदन्तीः ॥ २ ॥

तदयं तृचोऽनूदश्रयत । इयमेव गायत्र्यन्तरिक्षं त्रिष्टुबसौ जगती । तस्यैतत् तृचः ॥ ३ ॥

20 स उपरिष्टात् सामाध्याहितं तपति । सोऽध्रुव इवासीदलेलायदिव । स नोर्ध्वोऽतपत् ॥ ४ ॥

4. My Ll. °न्नाहरण for °न्नाह्.
5. My. °वृता for °व्रता; MyLl. संभवत P. सभवावहा see CN
12. MyI ऽव्यद्रवताम् for व्यद्रवताम्.
15. P. °पुत्र for पुत्रा.
17 MyL.वदनां for वदन्तीः
18. I. इदम् for इयम्.

स देवानब्रवीत् । उन्मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह दृंहतेति ॥ ५ ॥

तथेति । तमुदगायन् । तमेतदत्रादृंहन् । तेभ्यः श्रियं प्रायच्छत् । सैषा देवानां श्रीः ॥ ६ ॥

तत एतदूर्ध्वस्तपति । स नार्वाङ्तपत् ॥ ७ ॥ 5

स ऋषीनब्रवीत् । अनु मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह दृंहतेति ॥ ८ ॥

तथेति । तमन्वगायन् । तमेतदत्रादृंहन् । तेभ्यः श्रियं प्रायच्छन् । सैषा ऋषीणां श्रीः ॥ ९ ॥

तत एतदर्वाङ् तपति । स न तिर्यङ् अतपत् ॥ ९ ॥ 10

स गन्धर्वाप्सरसोऽब्रवीत् । आ मा गायतेति । किं ततः स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह दृंहतेति ॥ ११ ॥

तथेति । तं मागायन् । तमेतदत्रादृंहन् । तेभ्यः श्रियं प्रायच्छत् । सैषा गन्धर्वाप्सरसां श्रीः ॥ १२ ॥

तत एतत् तिर्यङ् तपति ॥ १३ ॥ 15

तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम् । तद्यथेदं वयमुद्गायाम एतदुद्गीतम् । अथ यद्यथागीतं तदनुगीतम् । अथ यत् किंचेति साम्नस्तदागीतम् । एतानि ह्येव त्रीणि साम्नः ॥१४॥

इति प्रथमेऽध्याये सप्तदशोऽनुवाके तृतीयः खण्डः

॥ सप्तदशोऽनुवाकः समाप्तः ॥ 20

---

2 & 12. My. द्रंहतेति, I दृंहेनेनि L. दुहनेति for दृंहनेति.

3. I. तंन्वागायन् for नमुदगायन्.

4. I. om सैषा देवाना .... प्रायच्छन् (L. 9).

5 My. नार्वाञ्च L नार्वाङ् for नार्वाङ°.

7. My द्रंहते°, L. दुहते° for दृंहने°.

16. My. उद्गीथम् for उद्गीतम्.

17. I. आगायाम for उद्गायाम; L उद्गीथम् for उद्गीतम्.

## अष्टादशोऽनुवाकः

### प्रथमः खण्डः

आपो वा इदमग्रे महत् सलिलमासीत् । स ऊर्मिरूर्मिमस्कन्दत् । ततो हिरण्मय्यौ कुश्यौ समभवताम् । ते एवर्क्सामे ॥ १ ॥

5 सेयमृक् इदं सामाभ्यप्लवत । तामपृच्छत् । का त्वमसीति । साहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद् यत् सा चामश्च तत् साम्नः सामत्वम् ॥ २ ॥

तौ वै संभवावेति । नेत्यब्रीत् । स्वसा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ॥ ३ ॥

10 सा पराप्लवत मिथुनमिच्छमाना । सा समाः सहस्रं सप्ततीः पर्यप्लवत ॥ ४ ॥

तदेष श्लोकः—

**स्त्री स्मैवाग्रे संचरतीच्छन्ती सलिले पतिम् ।**
**समाः सहस्रं सप्ततीस्ततोऽजायत पश्यतः ॥**

15 इति ॥ ५ ॥

असौ वा आदित्यः **पश्यतः** । एष एव तद् **अजायत** । एतेन हि पश्यति ॥ ६ ॥

सा वित्त्वा न्यप्लवत । साब्रवीत् । न वै त विन्दामि येन संभवेयम् । त्वयैव संभवानीति ॥ ७ ॥

20 सा वै द्वितीयामिच्छस्वेत्यब्रवीत् । न वै मैकोद्यंस्यसीति । सा द्वितीयां वित्त्वा न्यप्लवत ॥ ८ ॥

[सा वै तृतीयाम्] इच्छस्वैवेत्यब्रवीत् । नो वाव मा द्वे उद्यंस्यथ इति । सा तृतीयां वित्त्वा न्यप्लवत । सोऽब्रवीत् । अत्र वै 24 मोद्यंस्यथेति ॥ ९ ॥

---

4. P कुश्यौ for कुश्यौ.
10. My I I. °पपराप्लवन for पराप्लवत.
13. I. सचरन्ती for सचरती.
16 L तम्, My. तत [ ो] for तद्.
20 I. om नवै . . . इत्यब्रवीत्
22 My. को for नो.

स यदेकयाग्रे समवदत तस्मादेकर्चे साम । अथ यद् द्वे अपा-
सेधत् तस्माद् द्वयोर्न कुर्वन्ति । अथ यत् तिसृभिः समपादयत् तस्मादु
तृचे साम ॥ १० ॥

ता अब्रवीत् । पुनीध्वं न पूता वै स्थ इति ॥ ११ ॥

इति प्रथमेऽध्याये अष्टादशोऽनुवाके प्रथमः खण्डः 5

---

### द्वितीयः खण्डः

सा गायत्री गाथयाऽपुनीत नाराशस्या त्रिष्टुप् रैभ्या जगती ।
भीमं बत मलमपावधिषतेति । तस्माद् भीमला धियो वा एताः ।
धियो वा इमा मलमपावधिषतेति । तस्मादु भीमलाः । तस्मादु
गायता नाश्नीयात् । मलेन ह्येते जीवन्ति ॥ १ ॥ 10

अथर्क् सामाब्रवीत् । बहु वै किंच किंच पुमांश्चरति । त्वमनु
पुनीष्वेति । स ऊर्ध्वगणेनापुनीत ॥ २ ॥

पूतानि ह वा अस्य सामानि । पूता ऋचः । पूतानि यजूंषि ।
पूतमनूक्तम् । पूतं सर्वं भवति य एवं वेद ॥ ३ ॥

ताभ्यां दिशो मिथुनाय पर्यौहन् । तां संभविष्यन्नह्वयत अमोऽ- 15
हमस्मि सा त्वम् । सा त्वमसि अमोऽहमिति ॥ ४ ॥

तामेतदुभयतो वाचात्यरिच्यत हिंकारेण पुरस्तात् स्तोभेन
मध्यतो निधनेनोपरिष्टात् । अति तिस्रो ब्राह्मणायनीः सदृशीः रिच्यते
य एवं वेद ॥ ५ ॥

तयोर्यः संभवतोरूर्ध्वः शूषोऽद्रवत् । ते [ए]ते प्राणा एवोर्ध्वा 20
अद्रवन् ॥ ६ ॥

---

1. MyL. यद्वै for यद् द्वे.
2. MyL. संपादयत् for समपादयत्
7. L. °शंस्योत्त्रिष्टुब् for °शस्या त्रिष्टुप्
10. P. गायता for गायता.
15. MyL. पर्यौहत् for पर्यौहन्; ML. तं for ता;
MyI. °न्नाह्वयन्त, L. °न्नह्वयन्त for °न्नह्वयत.

सोऽसावादित्यः स एष एव **उत्** । अग्निरेव **गी** । चन्द्रमा एव **थम्** । सामान्येव **उत्** । ऋच एव **गी** । यजूंष्येव **थम्** । इत्यधिदैवतम् ॥ ७ ॥

अथाध्यात्मम् । प्राण एव **उत्** । वागेव **गी** । मन एव **थम्** ।
5 स एषोऽधिदैवतं चाध्यात्मं चोद्गीथः ॥ ८ ॥

स य एवमेतदधिदैवतं चाध्यात्मं चोद्गीथं वेद एतेन हास्य सर्वेणोद्गीतं भवति । एतस्माद् उ एव सर्वस्मादावृश्च्यते य एवं विद्वांसमुपवदति ॥ ९ ॥

**इति प्रथमेऽध्याये अष्टादशोऽनुवाके द्वितीयः खण्डः**

---

10

## तृतीयः खण्डः

तद् यदिदमाहुः क उदगासीरिति । क एतमादित्यमगासीरिति । ह वा एतत् पृच्छन्ति एतम् ॥ १ ॥

ह वा एतं त्रय्या विद्यया गायन्ति । यथा वीणागाथिनो गाययेयुरेवम् ॥ २ ॥

15 स एष ह्रदः कामानां पूर्णो यन्मनः । तस्यैषा कुल्या यद्वाक् ॥ ३ ॥

तद्यथा वा अतो ह्रदात् कुल्ययोर्वरामु[दकमु]पनयन्त्येवमेव एतन्मनसोऽधि वाचोद्गाता यजमानाय स्वकामान् प्रयच्छति ॥ ४ ॥

स य उद्गातारं दक्षिणाभिराराधयति तं सा कुल्योपधावति ।
19 य उ एनं नाराधयति स उ तामपि हन्ति ॥ ५ ॥

---

7 My उद्गीथं for उद्गीतं
11 My °महासी इति L °मगासी इति for °मगासीरिति.
14. My गाथयेयु. P. गापयेयुः for गाययेयुः
15. MyL यद्वत् for यद्वाक्.
16. MyLI. तद्यत्र for तद्यथा, L अदो P अपो for अतो, I. हृष्टान् for ह्रदात्
PL. °पराम् for °र्वराम्.
17. P. यजमानं यस्य, L. यजमाना यस्य for यजमानाय स्व°

अथ वा अतः प्रत्तिश्चैव प्रतिग्रहश्च । तद्धुममिति वै प्रदीयते । तद्वाचा यजमानाय प्रदेयम् । मनसा आत्मने । यथा ह सर्व न प्रयच्छति ॥ ६ ॥

तद्यदिदं संभवतो रेतोऽसिच्यत तदशयत् । यथा हिरण्यमविकृतं लेलायदेवम् ॥ ७ ॥ 5

तस्य सर्वे देवा ममत्विन आसन् मम ममेति । तेऽब्रुवन् वीदं करवामहा इति । तेऽब्रुवन् श्रेयो वा इदमस्मत् । आत्मभिरेवैनद्विक-रवामहा इति ॥ ८ ॥

तदात्मभिरेव व्यकुर्वत । तेषां वायुरेव हिंकार आस । अग्निः प्रस्तावः । इन्द्र आदिः । सोमाबृहस्पती उद्गीथः । अश्विनौ प्रति- 10 हारः । विश्वेदेवाः उपद्रवः । प्रजापतिरेव निधनम् ॥ ९ ॥

एता वै सर्वा देवताः । एता हिरण्यम् । अस्य सर्वाभिर्देवताभिः स्तुतं भवति । य एवं वेद । एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्च्यते । य एवं विद्वांसमुपवदति ॥ १० ॥

इति प्रथमेऽध्याये अष्टादशोऽनुवाके तृतीयः खण्डः 15

---

## चतुर्थः खण्डः

अथ ह ब्रह्मदत्तश्चैकितानेयः कुरुं जगाम अभिप्रतारिणं काक्ष-सेनिम् । स हास्मै मधुपर्कं ययाच ॥ १ ॥

अथ हास्य वै[या]घ्रपद्यः पुरोहितोऽन्ते निषसाद शौनकः । तं हानामन्त्र्य मधुपर्कं पपौ ॥ २ ॥ 20

---

1. My. अस्तः for अतः; L. प्रति° for प्रत्ति°; P. तद्धूम° for तद्धुम°.
4. MyL. °पिकृतं for °विकृतं.
5. My. एव for एवम्;
10. P. सोम° for सोमा°.
12. MyL. हिरण्यस्य, for हिरण्यम् । अस्य.
17. My. कूर इं, L. आ (कू) र इं for कुरुं; My. राक्ष्यसेनिं for काक्षसेनिम्.
19. L. वै प्रपद्य , P वै प्रपद्य for वैयाघ्रपद्य·
20. L. °मन्त्र्य. for °मन्त्र्य.

तं होवाच । किं विद्वान्नो दाल्भ्यानामन्त्र्य मधुपर्कं पिबसि इति । [....] साम वैयाघ्रपद्येति । [....] होवाच [....] ॥ ३ ॥

तं ह तत्रैव पप्रच्छ । यद् वायौ तद्वेत्था३ इति । हिंकारो वा अस्य स इति ॥ ४ ॥

5 यदग्नौ तद्वेत्था३ इति । प्रस्तावो वा अस्य स इति ॥ ५ ॥

यदिन्द्रे तद्वेत्था३ इति । आदिर्वा अस्य स इति ॥ ६ ॥

यत् सोमाबृहस्पत्योस्तद्वेत्था३ इति । उद्गीथो वा अस्य स इति ॥ ७ ॥

यदश्विनोस्तद्वेत्था३ इति । प्रतिहारो वा अस्य स इति ॥ ८ ॥

10 यद्विश्वेषु देवेषु तद्वेत्था३इति । उपद्रवो वा अस्य स इति ॥ ९ ॥

यत् प्रजापतौ तद्वेत्था३ इति । निधनं वा अस्य तदिति । होवाच । आर्षेयं वा अस्य तत् । बन्धुता वा अस्य सेति ॥ १० ॥

स होवाच । नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ॥ ११ ॥

अथ हेतरः पप्रच्छ । किंदेवत्यं साम वैय्याघ्रपद्येति । यद्देवत्याः 15 स्तुवत इति होवाच तद्देवत्यमिति ॥ १२ ॥

तदेतत् साध्वेव प्रत्युक्तम् । व्याप्तिर्वा अस्यैषेति । होवाच ब्रूह्येवेति । मेदं ते नमोऽकर्मेति । होवाच मैव नोऽतिप्राक्षीरिति ॥ १३ ॥

स होवाच । अप्राक्ष्यं वाव त्वा देवतामप्राक्ष्यं वाव त्वा देवतायै देवताः । वाग्देवत्यं साम । वाचो मनो देवता । मनसः पशवः । 20 पशूनामोषधयः । ओषधीनामापः । तदेतदद्भ्यो जातं साम अप्सु प्रतिष्ठितम् इति ॥ १४ ॥

इति प्रथमेऽध्याये अष्टादशेऽनुवाके चतुर्थः खण्डः

---

2. My. सामवैय्या, L. सामवैर्या P. सामवैयँ for साम वैयाघ्रपद्येति. see CN.
7. P. सोम° for सोमा°.
14. My. वैय्या, L. वैर्या, P. वैयँ for वैयाघ्रपद्येति; P. यद्देवत्यासु for यद्देवत्याः

## पञ्चमः खण्डः

देवासुरा अस्पर्धन्त । ते देवा मनसोदगायन् । तदेषामसुरा अभिद्रुत्य पाप्मना समसृजन् । तस्माद् बहु किंच किंच मनसा ध्यायति । पुण्यं चैनेन ध्यायति । पापं च ॥ १ ॥

ते वाचोदगायन् । तां तथैवाकुर्वन् । तस्माद् बहु किंच किंच वाचा वदति । सत्यं चैनया वदत्यनृतं च ॥ २ ॥ 5

ते चक्षुषोदगायन् । तत्तथैवाकुर्वन् । तस्माद् बहु किंच किंच चक्षुषा पश्यति । दर्शनीयं चैनेन पश्यति । अदर्शनीयं च ॥ ३ ॥

ते श्रोत्रेणोदगायन् । तत्तथैवाकुर्वन् । तस्माद् बहु किंच किंच श्रोत्रेण शृणोति । श्रवणीयं चैनेन शृणोति । अश्रवणीयं च ॥ ४ ॥ 10

ते अपानेनोदगायन् । तं तथैवाकुर्वन् । तस्माद् बहु किंच किंचापानेन जिघ्रति । सुरभि चैनेन जिघ्रति । दुर्गन्धि च ॥ ५ ॥

ते प्राणेनोदगायन् । अथासुरा अद्रवंस्तथा करिष्याम इति मन्यमानाः ॥ ६ ॥

स यथा अश्मानमृत्वा लोष्टो विध्वंसेत एवमेव असुरा व्यध्वंसन्त । स एषोऽश्माखणो यत् प्राणः ॥ ७ ॥ 15

स यथाश्मानमाखणमृत्वा लोष्टो विध्वंसते एवमेव स विध्वंसते । य एवं विद्वांसमुपवदति ॥ ८ ॥

इति प्रथमेऽध्याये अष्टादशोऽनुवाके पञ्चमः खण्डः

॥ अष्टादशोऽनुवाकः समाप्तः ॥ 20

॥ इति प्रथमोऽध्यायः ॥

---

2. My. उद्गायन्, L. अगायन् for उदगायन्.
5. My. उद्गायन् for उदगायन् everywhere; L. कुर्वन् for अकुर्वन्.
6. L. वैनया for चैनया.
11. L. तत् for तं
12. L चैवानेन for चैनेन.
20. L. after अष्टादशानुवाकः समाप्तः adds:—
गणाभिधानोपनिषद चल षष्टिखण्डकं नियोगाद्विनवाध्यायं श्रीकृष्णेन (शेषाद्रिर) लिखन्मुदा । गिरिवह्निसमुद्रकाननक्षन्तिरुद्राक्षिपदाग्नयो गुणः । कू (कु?) चकर्णं (शराश्वि) कुचाग्निसागरश्रुतिगङ्गाध्वगुणाङ्गजेषवः ॥

## अथ द्वितीयोऽध्यायः

### प्रथमोऽनुवाकः

### प्रथमः खण्डः

देवानां वै षड् उद्गातार आसन् । वाक् च मनश्च चक्षुश्च
5 श्रोत्रं च अपानश्च प्राणश्च ॥ १ ॥

तेऽम्रियन्त । तेनोद्गात्रा दीक्षामहै । येनापहत्य मृत्युमपहत्य
पाप्मानं स्वर्गं लोकम् इयामेति ॥ २ ॥

तेऽब्रुवन् । वाचोद्गात्रा दीक्षामहा इति । ते वाचोद्गात्रादीक्षन्त ।
स यदेव वाचा वदति तदात्मन आगायत् । अथ य इतरे कामास्तान्
10 देवेभ्यः ॥ ३ ॥

तां पाप्मान्वसृज्यत । स यदेव वाचा पापं वदति स एव स
पाप्मा ॥ ४ ॥

तेऽब्रुवन् न वै नोऽयं मृत्यु न पाप्मानमत्यवाक्षीत् । मनसोद्गात्रा
दीक्षामहा इति ॥ ५ ॥

15 ते मनसोद्गात्रादीक्षन्त । स यदेव मनसा ध्यायति तदात्मन
आगायत् । अथ य इतरे कामास्तान् देवेभ्यः ॥ ६ ॥

तत् पाप्मान्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स
पाप्मा ॥ ७ ॥

तेऽब्रुवन् नो न्वाव नोऽयं मृत्यु न पाप्मानमत्यवाक्षीत् । चक्षु-
20 षोद्गात्रा दीक्षामहा इति ॥ ८ ॥

---

4. My. adds हरिः ॐ before देवाना
5 J. om. प्राणश्च
7 IMy. अयाम for इयाम
9. My. आगायत for आगायत्.
11. L तामपाप्मा for ता पाप्मा.
13. L. नोऽयममृत्यु न for नोऽय मृत्य न; My. मृत्योर्न for मृत्युं न.
16. My. ता for तान्.
17. My. अवासृज्यत for अन्वसृज्यत, My. पाप्मान for पाप.
19. L. न्वव, Myl. नव for न्वाव; MyL. अमृत्युं for मृत्यु everywhere.

ते चक्षुषोद्गात्रादीक्षन्त । स यदेव चक्षुषा पश्यति तदात्मन आगायत् । अथ य इतरे कामास्तान् देवेभ्यः ॥ ९ ॥

तत् पाप्मान्वसृज्यत । स यदेव चक्षुषा पापं पश्यति [स एव स पाप्मा] ॥ १० ॥

तेऽब्रुवन् नो न्वाव नोऽयं मृत्यु न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥ ११ ॥ 5

ते श्रोत्रेणोद्गात्रादीक्षन्त । स यदेव श्रोत्रेण शृणोति तदात्मन आगायत् । अथ य इतरे कामास्तान् देवेभ्यः ॥ १२ ॥

तत् पाप्मान्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥ १३ ॥ 10

तेऽब्रुवन् नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । अपानेनोद्गात्रा दीक्षामहा इति ॥ १४ ॥

तेऽपानेनोद्गात्राऽदीक्षन्त । स यदेवापानेन अपानिति तदात्मन आगायत् । अथ य इतरे कामास्तान् देवेभ्यः ॥ १५ ॥

तं पाप्मान्वसृज्यत । स यदेवापानेन पापं गन्धम् अपानिति स एव स पाप्मा ॥ १६ ॥ 15

तेऽब्रुवन् नो न्वाव नोऽयं मृत्यु न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥ १७ ॥

ते प्राणेनोद्गात्रादीक्षन्त । स यदेव प्राणेन प्राणिति तदात्मन आगायत् । अथ य इतरे कामास्तान् देवेभ्यः ॥ १८ ॥ 20

तं पाप्मा नान्वसृज्यत । न ह्येतेन प्राणेन पापं वदति । न पापं ध्यायति । न पापं पश्यति । न पापं शृणोति । न पापं गन्धमपानिति ॥ १९ ॥ 23

---

2. My. तां for तान् everywhere.
15. My. तत् for तं; My. अपाप for पाप.
21. MyI. तत् पाप्मना° for त पाप्मा ना°.

तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति । य एवं वेद ॥ २९ ॥

इति द्वितीयेऽध्याये प्रथमेऽनुवाके प्रथमः खण्डः

---

## द्वितीयः खण्डः

5 सा या सा वागासीत् सोऽग्निरभवत् ॥ १ ॥

अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् ॥ २ ॥

अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत् ॥ ३ ॥

अथ यत्तच्छ्रोत्रमासीत् ता इमा दिशोऽभवन् । ता उ एव विश्वे देवाः ॥ ४ ॥

10 अथ यः सोऽपान आसीत् स बृहस्पतिरभवत् । यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः ॥ ५ ॥

अथ यः स प्राण आसीत् स प्रजापतिरभवत् । स एष पुत्री प्रजावानुद्गीथो यः प्राणः तस्य स्वर एव प्रजाः । प्रजावान् भवति य एवं वेद ॥ ६ ॥

15 तं हैतमेके प्रत्यक्षमेव गायन्ति । प्राणा३ प्राणा३ प्राणा३ हुम्भा ओवा इति ॥ ७ ॥

तद्ध होवाच शाट्यायनिस्तत एतमर्हति प्रत्यक्षं गातुम् । यद्वाव वाचा करोति तदेतदेवास्य कृतं भवतीति ॥ ८ ॥

अथ वा अत ऋक्साम्नोरेव प्रजापतिः । स यद्धिंकरोति अभ्येव 20 तेन क्रन्दति । अथ यत् प्रस्तौत्येव तेन प्लवते । अथ यदादिमादत्ते रेत एव तेन सिञ्चति। अथ यदुद्गायति रेत एव तेन सिक्तं संभवति।

---

19. MyL. अथ ऋक् for अत ऋक्, My. यद्धि for यद्धि.
20. MyI कुर्वति for क्रन्दति.
21. My. भवति, P. सभावयति for सभवति.

अथ यत् प्रतिहरति रेत एव तेन संभूतं प्रवर्धयति[1] । अथ यदुपद्रवति रेत एव तेन प्रवृद्धं विकरोति । अथ यन्निधनमुपैति रेत एव तेन विकृतं प्रजनयति । सैषर्क्साम्नोः प्रजापतिः ॥ ९ ॥

स य एवमेतामृक्साम्नोः प्रजापतिं वेद प्र हैनमृक्सामनी जनयतः ॥ १० ॥ 5

इति द्वितीयेऽध्याये प्रथमेऽनुवाके द्वितीयः खण्डः

॥ प्रथमोऽनुवाकः समाप्तः ॥

---

1. My. प्रवृथयति for प्रवर्धयति.

## द्वितीयोऽनुवाकः

### प्रथमः खण्डः

एष एवेदमग्र आसीत् । स एष तपति । स एष सर्वेषां भूतानां तेजोहर इन्द्रियं वीर्यमादायोर्ध्व उदक्रामत् ॥ १ ॥

5 सोऽकामयत । एकमेवाक्षरं स्वादु मृदु देवानां वनामेति ॥ २ ॥

स तपोऽतप्यत । स तपस्तप्त्वा एकमेवाक्षरमभवत् उ देवानाम् ॥ ३ ॥

तं देवाश्चर्षयश्चोपसमैप्सन् । अथैषोऽसुरान् भूतहनोऽसृजतैतस्य पाप्मनोऽनन्वागमाय ॥ ४ ॥

10 तं वाचोपसमैप्सन् । ते वाचं समारोहन् । तेषां वाचं पर्यादत्त । तस्मात् पर्यादत्ता वाक् । सत्यं ह्येनया वदति । अनृतं च ॥ ५ ॥

तं मनसोपसमैप्सन् । ते मनः समारोहन् । तेषां मनः पर्यादत्त । तस्मात् पर्यादत्तं मनः । पुण्यं च ह्येनेन ध्यायति । पापं च ॥ ६ ॥

तं चक्षुषोपसमैप्सन् । ते चक्षुः समारोहन् । तेषां चक्षुः 15 पर्यादत्त । तस्मात् पर्यात्तं चक्षुः । दर्शनीयं च ह्येनेन पश्यति । अदर्शनीयं च ॥ ७ ॥

तं श्रोत्रेणोपसमैप्सन् । ते श्रोत्रं समारोहन् । तेषां श्रोत्रं पर्यादत्त । तस्मात् पर्यात्तं श्रोत्रम् । श्रवणीयं चैनेन शृणोति । 19 अश्रवणीयं च ॥ ८ ॥

---

3. P. आसीद्य for आसीत् । स.
5. MyL. °मदु for मृदु; MyLI. देवानामेति for देवानां वनामेति.
6. P. om. उ देवानाम्.
9. My. अन्वागमाय for अनन्वागमाय.
11. My. om. तस्मात् पर्यादत्ता . . . . मनः पर्यादत्त.
15. P. पर्यत्तं for पर्यात्तं.
18. L. पर्याप्तं for पर्यात्तं.

तमपानेनोपसमैप्सन् । तेऽपानं समारोहन् । तेषामपानं पर्या-
दत्त। तस्मात् पर्यात्तोऽपानः । सुरभि च ह्येनेन जिघ्रति । दुर्गन्धि च ॥९॥

तं प्राणेनोपसमैप्सन् । तं प्राणेनोपसमाप्नुवन् ॥ १० ॥

अथासुरा भूतहन आद्रवन् मोहयिष्याम इति मन्यमानाः ॥ ११ ॥

स यथाश्मान[माखण]मृत्वा लोष्टो विध्वंसेतैवमेवासुरा व्यध्वं- 5
सन्त । स एषोऽश्माखणो यत्प्राणः ॥ १२ ॥

स यथाश्मानमाखणमृत्वा लोष्टो विध्वंसते एवमेव स विध्वंसते।
य एवं विद्वांसमुपवदति ॥ १३ ॥

इति द्वितीयेऽध्याये द्वितीयेऽनुवाके प्रथम. खण्डः

---

## द्वितीयः खण्डः 10

स एष वशी दीप्ताग्र उद्गीथो यत्प्राणः । एष हीदं सर्वं वशे
कुरुते । वशी भवति । वशे स्वान् कुरुते । य एवं वेद ॥ १ ॥

अस्य ह्यसावग्रे दीप्यतेऽमुष्य वा अतः । तं हैतमुद्गीथं शाट्या-
यनिराचष्टे वशी दीप्ताग्र इति । दीप्ताग्रा ह वा अस्य कीर्तिर्भवति ।
य एवं वेद ॥ २ ॥ 15

आभूतिरिति कारीरादयः । प्राणं वा अनु प्रजाः पशव आभवन्ति ।
स य एवमेतम् आभूतिरित्युपास्ते ऐव प्राणेन प्रजया पशुर्भवति ॥ ३ ॥

संभूतिरिति सात्ययज्ञयः । प्राणं वा अनु प्रजाः पशवः संभवन्ति ।
स य एवमेतं संभूतिरित्युपास्ते । समे[व] प्राणेन प्रजया पशुभि-
र्भवति ॥ ४ ॥ 20

---

4. My. लोपायिष्यामह for मोहयिष्याम.
11. MyL. repeat एष हीद सर्व वशे कुरुते.
12 MyL. वशो for वशे.
13. My. दीप्यते ते३मुष्य for दीप्यतेऽमुष्य; P. वास: for वा अत:
16. My. काशीरादय: for कारीरादय·
17. My. om. य·, IL. आभूरिति for आभूतिरिति.
18. L. संभूरिति for सभूतिरिति; My. °यञ्जय: for °यज्ञय·.
19. L. मभूरिति for संभूतिरिति.

प्रभूतिरिति चौळिनाः । प्राणं वा अनु प्रजाः पशवः प्रभवन्ति ।
स य एवमेतं प्रभूतिरित्युपास्ते । प्रैव प्राणेन प्रजया पशुभिर्भवति ॥ ५ ॥

भूतिरिति भाल्लबिनः । प्राणं वा अनु प्रजाः पशवो भवन्ति ।
स य एवमेतं भूतिरित्युपास्ते । भवत्येव प्राणेन प्रजया पशुभिः ॥ ६ ॥

5 अवरोद्धा अनवरुद्ध इति वार्ष्णशैलनाः । एष ह्यन्यमवरुणद्धि ।
नैतमन्यः । एष ह्येवास्य द्विषन्तं भ्रातृव्यमवरुणद्धि । य एवं वेद ॥ ७ ॥

इति द्वितीयेऽध्याये द्वितीयेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

एकवीर इत्यारुणेयः । एको ह्येवैष वीरो यत्प्राणः । आ हास्यै-
10 को वीरो वीर्यवान् जायते । य एवं वेद ॥ १ ॥

एकपुत्र इति चैकितानेयः । एको ह्येवैष पुत्रो यत्प्राणः ॥ २ ॥

स उ एव द्विपुत्र इति । द्वौ हि प्राणापानौ ॥ ३ ॥

स उ एव त्रिपुत्र इति । त्रयो हि प्राणोऽपानो व्यानः ॥ ४ ॥

स उ एव चतुष्पुत्र इति । चत्वारो हि प्राणोऽपानो व्यानः
15 समानः ॥ ५ ॥

स उ एव पञ्चपुत्र इति । पञ्च हि प्राणोऽपानो व्यानः
17 समानोऽवानः ॥ ६ ॥

---

1. P. शैलनाः for चौळिनाः
2. My. om. यः; I. प्रभूर् for प्रभूतिर्.
4. I. भूर् for भूतिर्.
5. P. अपरोघोऽनपरुद्ध इति पार्ष्णशैलनः for अवरोद्धा . . . . °शैलनाः
6. P. हृवास्य L. हैवास्य for ह्येवास्य; PI. अपरुणद्धि for अपरुणद्धि.
9. My. °वारुत्यारुण य एका, L. °वीरित्यारुण य एका for °वीर इत्यारुणेयः । एको°.
17. My. व्यानः L. अपानः for अवानः

स उ एव षट्पुत्र इति । षड् हि प्राणोऽपानो व्यानः समानोऽवान उदानः ॥ ७ ॥

स उ एव सप्तपुत्र इति । सप्त हीमे शीर्षण्याः प्राणाः ॥ ८ ॥

स उ एव नवपुत्र इति । सप्त शीर्षण्याः प्राणाः । द्वाववाञ्चौ ॥ ९ ॥ 5

स उ एव दशपुत्र इति । सप्तशीर्षण्याः प्राणाः । द्वाववाञ्चौ । नाभ्यां दशमः ॥ १० ॥

स उ एव बहुपुत्र इति । एतस्य हीयं सर्वाः प्रजाः ॥ ११ ॥

एतं ह स्म वैतदुद्गीथं विद्वांसः पूर्वे ब्राह्मणाः कामागायिन आहुः । कति ते पुत्रा नागास्याम इति ॥ १२ ॥ 10

इति द्वितीयेऽध्याये द्वितीयेऽनुवाके तृतीयः खण्डः

## चतुर्थः खण्डः

स यदि ब्रूयाद् एकं म आगायेति प्राण उद्गीथ इति विद्वानेक मनसा ध्यायेत् एको हि प्राणः । एको हास्याजायते ॥ १ ॥

स यदि ब्रूयात् द्वौ म आगायेति प्राण उद्गीथ इत्येव विद्वान् द्वौ 15 मनसा ध्यायेत् । द्वौ हि प्राणापानौ द्वौ हैवास्याजायेते ॥ २ ॥

स यदि ब्रूयात् त्रीन् म आगायेति प्राण उद्गीथ इत्येव विद्वाँस्त्रीन् मनसा ध्यायेत् । त्रयो हि प्राणोऽपानो व्यानः । त्रयो हैवास्याजायन्ते ॥ ३ ॥ 19

2. My. व्यानः, L. अपानः for अवानः
4. P. adds हि after सप्त.
8. MyI. वसु° for बहु.
9. My. कामागालनः, L. कामागाइन for कामागायिन
13. MyL. एक मम for एकं म°.
14. L. जायते for आजायते.
१६ My. मम for मे.

स यदि ब्रूयात् चतुरो म आगायेति प्राण उद्गीथ इत्येव विद्वाँश्चतुरो मनसा ध्यायेत् । चत्वारो हि प्राणोऽपानो व्यानः समानः । चत्वारो हैवास्याजायन्ते ॥ ४ ॥

स यदि ब्रूयात् पञ्च म आगायेति प्राण उद्गीथ इत्येव विद्वान्
5 पञ्च मनसा ध्यायेत् । पञ्च हि प्राणोऽपानो व्यानः समानोऽवानः । पञ्च हैवास्याजायन्ते ॥ ५ ॥

स यदि ब्रूयात् षण् म आगायेति प्राण उद्गीथ इत्येव विद्वान् षण् मनसा ध्यायेत् । षड् हि प्राणोऽपानो व्यानः समानोऽवानः उदानः । षड्ढैवास्याजायन्ते ॥ ६ ॥

10 स यदि ब्रूयात् सप्त म आगायेति प्राण उद्गीथ इत्येव विद्वान् सप्त मनसा ध्यायेत् । सप्त हीमे शीर्षण्याः प्राणाः । सप्त हैवास्याजायन्ते ॥ ७ ॥

स यदि ब्रूयात् नव म आगायेति प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत् । सप्त शीर्षण्याः प्राणाः । द्वाववाञ्चौ । नव
15 हैवास्याजायन्ते ॥ ८ ॥

स यदि ब्रूयाद् दश म आगायेति प्राण उद्गीथ इत्येव विद्वान् दश मनसा ध्यायेत् । सप्त शीर्षण्याः प्राणाः । द्वाववाञ्चौ । नाभ्यां दशमः । दश हैवास्याजायन्ते ॥ ९ ॥

स यदि ब्रूयात् सहस्रं म आगायेति प्राण उद्गीथ इत्येव विद्वान्
20 सहस्रं मनसा ध्यायेत् । सहस्रं हैत आदित्यरश्मयः । तेऽस्य पुत्राः । सहस्रं हैवास्याजायन्ते ॥ १० ॥

---

20. MyI. तस्य for तेऽस्य.

21. My. जायन्ते for आजायन्त.

एवं हैवैतमुद्गीथं पर आट्णारः कक्षीवांस्त्रसदस्युरिति पूर्वे महाराजाः श्रोत्रियाः सहस्रपुत्रमुपनिषेदुः । ते ह सर्व एव सहस्रपुत्रा आसुः ॥ ११ ॥

स य एवैवं वेद सहस्रं हैवास्य पुत्रा भवन्ति ॥ १२ ॥

इति द्वितीयेऽध्याये द्वितीयेऽनुवाके चतुर्थः खण्डः 5

॥ द्वितीयोऽनुवाकः समाप्तः ॥

1. MyL. ह for है°.
3. My. आहुः for आसुः
4. My. ins. यद्वै and My. यदेव after सः; MyL. om. एव.

## तृतीयोऽनुवाकः

### प्रथमः खण्डः

शर्यातो वै मानवः प्राच्यां स्थल्यामयजत । तस्मिन् ह भूतान्यु-
द्गीथेऽपि समैषिरे ॥ १ ॥

5　तं देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन् । अयं
ते उद्गायत्विति । बम्बेन आजद्विषेण पितरो दक्षिणतः अयं ते
उद्गायत्विति । उशनसा काव्येन असुराः पश्चात् अयं ते उद्गायत्विति ।
अयास्येनाङ्गिरसेन मनुष्या उत्तरतः अयं ते उद्गायत्विति ॥ २ ॥

स हेक्षांचक्रे हन्तैनान् पृच्छानि । कियतो वा एक ईशे कियत
10　एकः कियत एक इति ॥ ३ ॥

स होवाच बृहस्पतिम् । यन्मे त्वमुद्गायेः किं ततः स्यादिति ॥४॥

स होवाच । देवेष्वेव श्रीः स्यात् । देवेष्वीशा । स्वर्गमु त्वा
लोकं गमयेयमिति ॥ ५ ॥

अथ होवाच बम्बमाजद्विषम् । यन्मे त्वम् उद्गायेः किं ततः
15　स्यादिति ॥ ६ ॥

स होवाच । पितृष्वेव श्रीः स्यात् । पितृष्वीशा । स्वर्गमु त्वा
लोकं गमयेयमिति ॥ ७ ॥

अथ होवाचोशनसं काव्यम् । यन्मे त्वमुद्गायेः ततः कि
19　स्यादिति ॥ ८ ॥

---

3. MyL. शय्यातः for शर्यातः; MyLI. स्याल्याम् for स्थल्याम्.
4. P. °पित्वमेषिरे for °पि समैषिरे.
6. L. बिम्बेन, MyI. बिञ्जेन for बम्बेन.
7. MyL. कांस्येनासुरांश्चातः for काव्येन असुराः पश्चात्.
8. My. अयं हि स्येन L. अयां(यं)हस्येन for अयास्येन.
9. My. सहैषां, L. स हैक्षां for स हेक्षां.
11. MyLI. बृहस्पतिः for बृहस्पतिम्; My. अमुद्गायो for त्वमुद्गायेः.
12. MyI. om. स होवाच । देवेष्वेव . . . कि ततः स्यादिति (L.15); L. adds श्रियं before स होवाच.
16. LP. त्वां for त्वा everywhere; My. उक्त्वा for उ त्वा everywhere.
18. My. यं ये, L. यजे for यन्मे.

स होवाच । असुरेष्वेव श्रीः स्यात् । असुरेष्वीशा । स्वर्गमु त्वा लोकं गमयेयमिति ॥ ९ ॥

अथ होवाचायास्यमाङ्गिरसम् । यन्मे त्वमुद्गाये किं ततः स्यादिति ॥ १० ॥

स होवाच । देवानेव देवलोके दध्याम् । मनुष्यान् मनुष्य- 5
लोके । पितॄन् पितृलोके । नुदेय अस्माल्लोकादसुरान् उ । स्वर्गमु त्वा लोकं गमयेयम् इति ॥ ११ ॥

इति द्वितीयेऽध्याये तृतीयेऽनुवाके प्रथमः खण्डः

---

## द्वितीयः खण्डः

स होवाच त्वं मे भगव उद्गाय य एतस्य सर्वस्य यशस 10
इति ॥ १ ॥

तस्य हायास्य एवोज्जगौ । तस्मादुद्गाता वृत उत्तरतो निवेशनं लिप्सेत । एतद्धचनारुद्धं निवेशनं यदुत्तरतः ॥ २ ॥

उत्तरत आगतोऽयास्य आङ्गिरसः शर्यातस्य मानवस्योज्जगौ ।
स प्राणेन देवान् देवलोकेऽदधात् । अपानेन मनुष्यान् मनुष्यलोके । 15
व्यानेन पितॄन् पितृलोके । हिंकारेण वज्रेण अस्मात् लोकात् असुराननुदत ॥ ३ ॥

तान् होवाच । दूरं गच्छतेति । स दूरो ह नाम लोकः । तं ह जग्मुः । त एतेऽसुरा असंह्ये (ह्ये?) यं पराभूताः ॥ ४ ॥ 19

---

1. MyL. ईशाः for ईशा.
5. MyI. दध्यात् for दध्याम्
6. P. असुरान् for असुरान् उ
10. P. यशो [स्री] ति for यशस इति. see CN.
12. MyL. व्रत for वृत
13. P. एतद्ध नारुद्ध, L एतद्ध नारुद्ध for एतद्धचनारुद्ध.
14. My. या सः for 'यास्य ; MyL शय्यातस्य for शर्यातस्य.
19. P. असभाव्यं for असह्येय see CN

छन्दोभिरेव वाचा शर्यातं मानवं स्वर्गं गमयांचकार ॥ ५ ॥

ते होचुरसुराः । एत तं वेदाम यो नोऽयमित्थमधत्तेति । तत आगच्छन् । तमेत्यापश्यन् ॥ ६ ॥

तेऽब्रुवन्नयं वा आस्य इति । यदब्रुवन्नयं वा आस्य इति तस्मा-
5 दयमास्यः । अयमास्यो ह वै नामैषः । तमयास्य इति परोक्षमा-
चक्षते ॥ ७ ॥

स प्राणो वा अयास्यः । प्राणो ह वा एनान् स नुनुदे ॥ ८ ॥

स य एवं विद्वानुद्गायति प्राणेनैव देवान् देवलोके दधाति । अपानेन मनुष्यान् मनुष्यलोके । व्यानेन पितॄन् पितृलोके । हिंकारे-
10 णैव वज्रेण अस्मात् लोकाद् द्विषन्तं भ्रातृव्यं नुदते ॥ ९ ॥

इति द्वितीयेऽध्याये तृतीयेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

तं ह ब्रूयाद् दूरं गच्छेति । स यमेव लोकम् असुरा अगच्छंस्तं हैव गच्छति ॥ १ ॥

15 छन्दोभिरेव वाचा यजमानः स्वर्गं लोकं गमयति ॥ २ ॥

ता एता व्याहृतयः । प्रेत्येति वाक् [इति] भूर्भुवः सुवरिति [उदिति] ॥ ३ ॥

तद्यत्-प्रेति स प्राणः । तदयं लोकस्तदिमं लोकममुष्मिँल्लोक आभजति ॥ ४ ॥

20 ए (अ+इ)ति अपानः । तदसौ लोकस्तदमुं लोकममुष्मिँल्लोक आभजति ॥ ५ ॥

---

1. MyL. शय्यातं for शर्यातं; L. अमानवं for मानवं.
5. My. om. अयमास्यो; L. अयमयासो ह for अयमास्यो ह.
14. MyL. आगच्छति for गच्छति.
16. वाक् see CN.
18. P. तत्प्राणः, L. सत्प्राणः for स प्राणः

वागिति तद् ब्रह्म । तदिदमन्तरिक्षम् ॥ ६ ॥

भूर्भुवःसुवरिति सा त्रयी विद्या ॥ ७ ॥

उदिति सोऽसावादित्यः । तद् यदुदिति उदिव श्लेषयति ॥ ८ ॥

तद्यदेकमेवाभिसंपद्यते तस्मादेकवीरः । एको ह तु सन् वीरो वीर्यवान् भवति । आहास्यैको वीरो वीर्यवान् जायते । य एवं वेद ॥ ९ ॥ 5

तदु होवाच शाट्यायनिः । बहुपुत्र एष उद्गीथ इत्येवोपासितव्यम् । बहवो ह्येत आदित्यस्य रश्मयः तेऽस्य पुत्राः । तस्मात् बहुपुत्र एष उद्गीथ इत्येवोपासितव्यम् इति ॥ १० ॥

**इति द्वितीयेऽध्याये तृतीयेऽनुवाके तृतीयः खण्डः** 10

॥ तृतीयोऽनुवाकः समाप्तः ॥

---

8. PI. आदित्यरश्मयः for आदित्यस्य रश्मयः; MyL. तस्य for तेऽस्य.

## चतुर्थोऽनुवाकः

### प्रथमः खण्डः

देवासुराः समयतन्तेत्याहुः । न ह वै तद् देवासुराः संयेतिरे । प्रजापतिश्च ह वै तन्मृत्युश्च संयेताते ।। १ ।।

5 तस्य ह प्रजापतेर्देवाः प्रियाः पुत्राः अन्त आसुः । तेऽब्रियन्त । तेनोद्गात्रा दीक्षामहै येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ।। २ ।।

तेऽब्रुवन् वाचोद्गात्रा दीक्षामहा इति ।। ३ ।।

ते वाचोद्गात्रादीक्षन्त । तेभ्य इदं वागागायत् । यदिदं वाचा
10 वदति । यदिदं वाचा भुञ्जते ।। ४ ।।

तां पाप्मान्वसृज्यत । स यदेव वाचा पापं वदति स एव स पाप्मा ।। ५ ।।

ते अब्रुवन् । न वै नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । मनसोद्गात्रा दीक्षामहा इति ।। ६ ।।

15 ते मनसोद्गात्रादीक्षन्त । तेभ्य इदं मन आगायत् । यदिदं मनसा ध्यायति । यदिदं मनसा भुञ्जते ।। ७ ।।

तत् पाप्मान्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ।। ८ ।।

तेऽब्रुवन् । नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् ।
20 चक्षुषोद्गात्रा दीक्षामहा इति ।। ९ ।।

ते चक्षुषोद्गात्रादीक्षन्त । तेभ्य इदं चक्षुरागायत् । यदिदं चक्षुषा पश्यति । यदिदं चक्षुषा भुञ्जते ।। १० ।।

---

13. MyL. अमृत्युं for मृत्युं.

17. My. om. यद्.

तत् पाप्मान्वसृज्यत । स यदेव चक्षुषा पापं पश्यति स एव स पाप्मा ॥ ११ ॥

तेऽब्रुवन् । नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥ १२ ॥

ते श्रोत्रेणोद्गात्रादीक्षन्त । तेभ्य इदं श्रोत्रमागायत् । यदिदं श्रोत्रेण शृणोति । यदिदं श्रोत्रेण भुञ्जते ॥ १३ ॥ 5

तत् पाप्मान्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥ १४ ॥

तेऽब्रुवन् । नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥ १५ । 10

ते प्राणेनोद्गात्रादीक्षन्त । तेभ्य इदं प्राण आगायत् । यदिदं प्राणेन प्राणिति । यदिदं प्राणेन भुञ्जते ॥ १६ ॥

तं पाप्मान्वसृज्यत । स यदेव प्राणेन [पापं] प्राणिति स एव स पाप्मा ॥ १७ ॥

तेऽब्रुवन् । नो न्वाव नोऽयं मृत्युं न पाप्मानमत्यवाक्षीत् । 15 अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥ १८ ॥

तेऽनेन मुख्येन प्राणेन उद्गात्रादीक्षन्त ॥ १९ ॥

सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति ॥ २० ॥

न ह्येतेन प्राणेन पापं वदति । न पापं ध्यायति । न पापं 20 पश्यति । न पापं शृणोति । न पापं गन्धमपानिति ॥ २१ ॥

तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति । य एवं वेद ॥ २२ ॥ 23

इति द्वितीयेऽध्याये चतुर्थेऽनुवाके प्रथमः खण्डः

---

10. MyIL. add स before प्राणेन.

22. MyL. गमयन् for आयन्.

## द्वितीयः खण्डः

स यथा हत्वा प्रमृद्यातीयात् एवमेवैतं मृत्युमत्यायन् ॥ १ ॥

स वाचं प्रथमामत्यवहत् । तां परेण मृत्युं न्यदधात् । सोऽग्नि-
रभवत् ॥ २ ॥

5 अथ मनोऽत्यवहत् । तत् परेण मृत्युं न्यदधात् । स चन्द्रमा
अभवत् ॥ ३ ॥

अथ चक्षुरत्यवहत् । तत् परेण मृत्युं न्यदधात् । स आदि-
त्योऽभवत् ॥ ४ ॥

अथ श्रोत्रमत्यवहत् । तत् परेण मृत्युं न्यदधात् । ता इमा
10 दिशोऽभवन् । ता उ एव विश्वे देवाः ॥ ५ ॥

अथ प्राणमत्यवहत् । तं परेण मृत्युं न्यदधात् । स वायुर-
भवत् ॥ ६ ॥

अथात्मने केवलमेवान्नाद्यमागायत् ॥ ७ ॥

स एष एवायास्यः । [यद्] आ[सा] सेधति तस्मादयास्यः
15 (आस्यः?) । यद्वेवास्ये रमते तस्मादु एवायास्यः ॥ ८ ॥

स एष एवाङ्गिरसः । अतो हीमान्यङ्गानि रसं लभन्ते ।
तस्मादाङ्गिरसः । यद्वेवैषामङ्गानां रसः तस्माद्वेवाङ्गिरसः ॥ ९ ॥

तं देवा अब्रुवन् । केवलं वा आत्मनेऽन्नाद्यमागासीः । अनु न
19 एतस्मिन्नन्नाद्यमाभज । एतदस्यानामयत्वमस्तीति ॥ १० ॥

---

2. MyI. वीय for स यथा; MyLI. before एवम् add सः;
MyL. अत्यायत् for अत्यायन्; My. after मृत्युमायन् adds स आदित्योऽ
भवत् । अथ श्रोत्रमत्यवहत् । तत्परेण मृत्युं न्यदधात् । स चन्द्रमा अभवत् ।
अथ चक्षुरत्यवहत् । तत्परेण मृत्युं न्यदधात् ।
14. MyI. आस्ये य्येति, P. आस्ये धीयते L. आसेध्यति for आसा सेधति see CN.
15. MyI. उ यद्वेऽङ्गस्योमते, P. यद्वेवा[यम्]आस्य रमते for यद्वेवास्ये रमते.
16. I. om. एषः
18. MyI. आगा for आगासीः.
19. L. अन्नाद्यम् आभजः, My. अन्नाद्य आगं P. अनाद्य आभज for अन्नाद्यमाभज;
LMy. आमयत्वमसि for अनामयत्वमस्ति.

तं वै मा प्रविशतेति । स वा आकाशान् कुरुष्वेति । स इमान् प्राणानाकाशानकुरत ॥ ११ ॥

तं वागेव भूत्वाग्निः प्राविशत् । मनो भूत्वा चन्द्रमाः । चक्षुर्भूत्वा आदित्यः । श्रोत्रं भूत्वा दिशः । प्राणो भूत्वा वायुः ॥ १२ ॥

एषा वै दैवी परिषत् । दैवी सभा । दैवी संसत् ॥ १३ ॥ 5

गच्छति ह वा एतां दैवीं परिषदं दैवीं सभां दैवीं संसदम् । य एवं वेद ॥ १४ ॥

इति द्वितीयेऽध्याये चतुर्थेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

यत्रो ह वै क्व चैता देवता निस्पृशन्ति न हैव तत्र कश्चन 10 पाप्मा न्यङ्गः परिशिष्यते ॥ १ ॥

स विद्यान्नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यते । सर्वमेवैता देवताः पाप्मानं निधक्ष्यन्तीति । तथा हैव भवति ॥ २ ॥

य उ ह वा एवंविदमृच्छति । यथैता देवता ऋत्वा नीयादेवं न्येति । एतासु ह्येवैनं देवतासु प्रपन्नम् एतासु वसन्तमुपवदति ॥ ३ ॥ 15

तस्य हैतस्य नैव काचनार्तिरस्ति । य एवं वेद । य एवैनमुपवदति स अर्तिमार्छेति ॥ ४ ॥

स य एनमृच्छादेव ता देवता उपसृत्य ब्रूयात् अयं मा आरत् स इमामार्तिं न्येत्विति । तां हैवार्तिं न्येति ॥ ५ ॥ 19

---

1. P. om. मा; LMy. आकाशात् for आकाशान्.
2. MyL. आशासनं कुरुत for आकाशानकुरुत.
3. MyL. प्रविशन् for प्राविशत्.
10. L. चेता for चैता.
12. LMy. परिशेक्षते for परिशेक्ष्यते; L. एवं for एव; My. om. सर्वमेवैता . . . न्येति एतासु. L. 15.
15. L. नेति for न्येति.
18. My. °हृत्य for °सृत्य; अयममारात् for अयं मा आरत्.

यावदा वशा उ हास्ये मे प्राणा अस्मिँल्लोक एतावदा वशा उ हास्यैता देवता अमुष्मिँल्लोके भवन्ति ॥ ६ ॥

तस्मादु हैवं विद्वान् नैवागृहतायै बिभीयान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहान् करिष्यन्ति । एता अमुष्मिँल्लोके भवन्ति ।
5 तस्मादु लोकं प्रदास्यन्तीति ॥ ७ ॥

तस्मादु हैवं विद्वान्नैवागृहतायै बिभियान्नालोकतायै । एता मे देवता अस्मिँल्लोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य आयतनेभ्य इति हैव विद्यात् । एता अमुष्मिँल्लोके लोकं प्रदास्यन्तीति ॥ ८ ॥

तस्मादु हैवं विद्वान् नैवागृहतायै बिभीयान्नालोकतायै । एता म
10 एतदुभयं संनंस्यन्तीति हैव विद्यात् । तथा हैव भवति ॥ ९ ॥

**इति द्वितीयेऽध्याये चतुर्थेऽनुवाके तृतीयः खण्डः**

॥ चतुर्थोऽनुवाकः समाप्तः ॥

---

1. P. आवासाः for आ वशाः
2. My. after भवन्ति adds तस्मादु लोकं प्रदास्यन्तीति ।
3. MyL. अग्रहतायै for अगृहतायै.
5. L. प्र व [ा] दास्यन्तीति for प्रदास्यन्तीति.
7. My. इहैव for इति हैव.
8. LMy. एवा ता, P. [एता] देवता for एता see CN.

## पञ्चमोऽनुवाकः

### प्रथमः खण्डः

देवा वै ब्रह्मणो वत्सेन वाचमदुह्रन् । अग्निर्ह वै ब्रह्मणो वत्सः ॥ १ ॥

सा या सा वाग् ब्रह्मैव तत् । अथ योऽग्निर्मृत्युः सः ॥ २ ॥ 5

तामेतां वाचं यथा धेनुं वत्सेनोपसृज्य प्रत्तां प्रत्तां दुहीत । एवमेव देवा वाचं सर्वान् कामान् अदुह्रन् ॥ ३ ॥

दुहे ह वै वाचं सर्वान् कामान् । य एवं वेद । स हैषो नानृतां वाचं देवीमुदिन्धे वद वद वदेति ॥ ४ ॥

तद्यदिह पुरुषस्य पापं कृतं भवति तदाविष्करोति । यदिहै- 10
नदपि रहसीव कुर्वन् मन्यतेऽथ हैनदाविरेव करोति । तस्माद्वाव पापं न कुर्यात् ॥ ५ ॥

इति द्वितीयेऽध्याये पञ्चमेऽनुवाके प्रथमः खण्डः

---

### द्वितीयः खण्डः

एष उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः ॥ १ ॥ 15

तं साधूपचरेत् । य एनमस्मिँल्लोके साधूपचरति तमेषोऽमुष्मिँ-
ल्लोके साधूपचरति ॥ २ ॥

अथ य एनमस्मिँल्लोके नाद्रियते तमेषोऽमुष्मिँल्लोके नाद्रियते । तस्माद्वा अग्निं साधूपचरेत् ॥ ३ ॥

तं नैव हस्ताभ्यां स्पृशेत् । न पादाभ्यां न दण्डेन ॥ ४ ॥ 20

---

6. I.om. प्रत्ताम्.
8. My. हैषो नानृतानां, L. हैषो नानृतो, P. हैषोऽ नानृतो for हैषो नानृतां see CN.
9. My. उविंन्दे for उदिन्धे; L. वद वदति for वद वद वदेति.
12. MyL. add एष उ ह्वा after कुर्यात्.
16. My. तासां for तं साधु; MyI. before यः adds सः; L. सः for यः; MyL. साधु चरति for साधूपचरति.
18. L. om. तमेषोऽमुष्मिँल्लोके; MyI. om. लोके.
20. MyI. तद्धैनं, L. तण्डेन for दण्डेन.

हस्ताभ्यां स्पृशति यदस्यान्तिकमवनेनिक्ते । अथ यदभिप्रसारयति तत्पादाभ्याम् ।। ५ ।।

स एनमास्पृष्ट ईश्वरो दुर्धायां धातोः । तस्माद्वा अग्निं साधूपचरति । सुधायां हैवैनं दधाति ।। ६ ।।

5 इति द्वितीयेऽध्याये पञ्चमेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

एष उ ह वाव देवानां महाशनतमो यदग्निः ।। १ ।।

तन्न व्रत्यमददानोऽश्नीयात् । यो वै महाशने अनश्नति अश्नाति ईश्वरो हैनमभिषङ्क्तोः । पूतिमिव ह्याश्नीयात् ।। २ ।।

10 अथो ह प्रोक्तेऽशने ब्रूयात् समिन्त्स्वाग्निमिति । स यथा प्रोक्तेऽशने श्रेयाँसं परिवेष्टवै ब्रूयात् तादृक् तत् ।। ३ ।।

एतदु ह वाव साम तद्वाक् । यो वै चक्षुः साम श्रोत्रं सामेत्युपास्ते न ह तेन करोति ।। ४ ।।

अथ यदादित्यः साम चन्द्रमाः सामेत्युपास्ते न हैव तेन 15 करोति ।। ५ ।।

अथ यो वाक् सामेत्युपास्ते स एवानुष्ठ्या साम वेद । वाचा 17 हि साम्नार्त्विज्यं क्रियते ।। ६ ।।

---

3. I दूर्ध्वायां for दुर्धायां: My. जातो for धातोः
8. My. प्रत्यङन्द्रासीन; LI. प्रत्यङ्डासीन for व्रत्यमददानः
9. MyI. पूतिरिव मिह्या° L. पूतिरिवमिव ह्या° for पूतिमिव ह्या°.
11 I. तम् for तत्,
12. I. यद् for तद्.
13. MyL. नाह for न ह.
14. MyL. नाहैव for न हैव.
16. My काचामेहि for वाचा हि

स यो वाचः स्वँरो जायते सोऽग्निः । वाग्वेव वाक् । तदत्रै-
कधा साम भवति ॥ ७ ॥

स य एवमेतदेकधा साम भवद्वेद एवं हैतदेकधा भवतीति एक-
धेव श्रेष्ठः स्वानां भवति ॥ ८ ॥

तस्मादु हैवंविदमेव साम्नार्त्विज्यं कारयेत् । स ह वाव साम 5
वेद । य एवं वेद ॥ ९ ॥

इति द्वितीयेऽध्याये पञ्चमेऽनुवाके तृतीयः खण्डः

॥ पञ्चमोऽनुवाकः समाप्तः ॥ 8

॥ इति द्वितीयोऽध्यायः ॥

---

3. My. एक एव for एकधेव; I. एकया for एकधा everywere.
5. My. विदयेव for विदमेव.
8. MyL. after पञ्चमोऽनुवाकः समाप्तः add:
   श्रुत्यन्ताश्रमहीदेवः श्रीनिवास इति श्रुतः ।
   एकहीनकलाखण्डं शराध्यायमलीलिखत् ॥

## अथ तृतीयोऽध्यायः

### प्रथमः अनुवाकः

### प्रथमः खण्डः

एका ह् वाव कृत्स्ना देवता । अर्धदेवता एवान्याः । अयमेव
5 योऽयं पवते ॥ १ ॥

एष एव सर्वेषां देवानां ग्रहाः ॥ २ ॥

स हैषोऽस्तं नाम । अस्तमिति हेह पश्चाद् ग्रहानाचक्षते ॥ ३ ॥

स यदादित्योऽस्तमगाद् इति ग्रहानगाद् इति हैतत् तेन सोऽसर्वः । स एतमेवाप्येति ॥ ४ ॥

10 अस्तं चन्द्रमा एति । तेन सोऽसर्वः । स एतमेवाप्येति ॥ ५ ॥

अस्तं नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवा-पियन्ति ॥ ६ ॥

अन्वग्निर्गच्छति । तेन सोऽसर्वः । स एतमेवाप्येति ॥ ७ ॥

एत्यहः । एति रात्रिः । तेन ते असर्वे । ते एतमेवापीतः ॥ ८ ॥

15 मुह्यन्ति दिशः । न वै ता रात्रिं प्रज्ञायन्ते । तेन ता असर्वाः । ता एतमेवापियन्ति ॥ ९ ॥

वर्षति च पर्जन्यः । उच्च गृह्णाति । तेन सोऽसर्वः । स एतमेवाप्येति ॥ १० ॥

क्षीयन्त आपः । एवमोषधयः । एवं वनस्पतयः । तेन तान्य-
20 सर्वाणि । तान्येतमेवापियन्ति ॥ ११ ॥

तद्यदेतत् सर्वं वायुमेवाप्येति । तस्माद्वायुरेव साम ॥ १२ ॥

---

14. MyLI. अपीताः for अपीतः

15. MyLI. तां for ता,

17. L. before वर्षति adds तद्यदेतत्; MyLI. after असर्वः add स साम वेद.

स ह वै सामवित् । स [कृत्स्नं] साम वेद । य एवं वेद ॥ १३ ॥

अथाध्यात्मम् । न वै स्वपन् वाचा वदति । सेयमेव प्राण-मप्येति ॥ १४ ॥

न मनसा ध्यायति । तदिदमेव प्राणमप्येति ॥ १५ ॥

न चक्षुषा पश्यति । तदिदमेव प्राणमप्येति ॥ १६ ॥ 5

न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥ १७ ॥

तद्यदेतत्सर्वं प्राणमेवाभिसमेति तस्मात् प्राण एव साम ॥ १८ ॥

स ह वै सामवित् स कृत्स्नं साम वेद । य एवं वेद ॥ १९ ॥

तद्यदिदमाहुर्न वताद्य वातीति हैतत्पुरुषेऽन्तर्निरमिते स पूर्णः स्वेदमान आस्ते ॥ २० ॥ 10

तद्ध शौनकं च कापेयमभिप्रतारिणं च [काक्षसेनिं] ब्राह्मणः परिवेविष्यमाणावुपावव्राज ॥ २१ ॥

इति तृतीयेऽध्याये प्रथमेऽनुवाके प्रथमः खण्डः

---

## द्वितीयः खण्डः

तौ ह बिभिक्षे । तं ह नाददाते को वा को वा इति 15 मन्यमानौ ॥ १ ॥

तौ होपजगौ—

**महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः ।**

**तं कापेय न विजानन्त्येकेऽभिप्रतारिन् बहुधा निविष्टम् ॥**

इति ॥ २ ॥ 20

---

2. I. सेमम् for सेयम्.
9. P. निरमते, MyI. निरममीते for निरमिते see CN.
15. My. बिभिक्षेत ह for बिभिक्षे तं ह.
18. MyLI. सो for स.
19. MyL. कालपयन for कापेय.

स होवाच अभिप्रतारीमं वाव प्रपद्य प्रतिब्रूहीति । त्वया वायं प्रत्युच्य इति ॥ ३ ॥

तं ह प्रत्युवाच—

**आत्मा देवानामुत मर्त्यानां हिरण्यदन्तो रपसो न सूनुः ।**

5 **महान्तमस्य महिमानमाहुरनद्यमानो यददन्तमत्ति ॥**

इति ॥ ४ ॥

**महात्मनश्चतुरो [देव]एक** इति । वाग्वा अग्निः । स महात्मा देवः । स यत्र स्वपिति तद्वाचं प्राणो गिरति ॥ ५ ॥

मनश्चन्द्रमाः । स महात्मा देवः । स यत्र स्वपिति तन्मनः

10 प्राणो गिरति ॥ ६ ॥

चक्षुरादित्यः । स महात्मा देवः । स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ॥ ७ ॥

श्रोत्रं दिशस्ता महात्मानो देवीः । स यत्र स्वपिति तच्छ्रोत्रं प्राणो गिरति ॥ ८ ॥

15 **तद्यन्महात्मनश्चतुरो देव एक** इत्येतद्ध तत् ॥ ९ ॥

**कः स जगारेति ।** प्रजापतिर्वै कः । स हैतज्जगार ॥ १० ॥

**भुवनस्य गोपा** इति । स उ वाव भुवनस्य गोपाः ॥ ११ ॥

**तं कापेय न विजानन्त्येक** इति । न ह्येतमेके विजानन्ति ॥१२॥

**अभिप्रतारिन् बहुधा निविष्टम्** इति । बहुधा ह्येवैष निविष्टो

20 यत्प्राणः ॥ १३ ॥

**आत्मा देवानामुत मर्त्यानामिति** । आत्मा ह्येष देवानाम् उत

22 मर्त्यानाम् ॥ १४ ॥

---

1. MyL. अभिप्रतारीमायया for अभिप्रतारीमं; I, °प्रतारी मायया for °प्रतारीमं वाव; My. अया for त्वया; I. आया वाव अय for त्वया वायं.
2. MyL. प्रत्युच्चेति for प्रत्युच्य इति.
4. MyL. परसो for रपसो.
5. My. यदि तदन्नम्, LI. यदिदं तम् for यददन्तम्.
7. MyL. वाया for वाग्वा.
13. PL. देवाः for देवीः
16. MyL. सो for स.
21. MyLI. उतो for उत.

**हिरण्यदन्तो रपसो न सूनुरिति** । न ह्येष सूनुः । सूनुरूपो ह्येष सन्नसूनुः ॥ १५ ॥

**महान्तमस्य महिमानमाहुरिति** । महान्तं ह्येतस्य महिमानमाहुः ॥ १६ ॥

**अनद्यमानो यददन्तमत्तीति** । अनद्यमानो ह्येषोऽदन्तमत्ति ॥१७॥ 5

इति तृतीयेऽध्याये प्रथमेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

तस्यैष श्रीरात्मा समुद्रूढो यदसावादित्यः । तस्माद् गायत्रस्य स्तोत्रे नावान्यात् । नेच्छ्रिया अवच्छिद्या इति ॥ १ ॥

स एष एवोक्थम् । यत् पुरस्तादवानिति तदेतदुक्थस्य शिरः । 10 यद्दक्षिणतः स दक्षिणः पक्षः । यदुत्तरतः स उत्तरः पक्षः । यत् पश्चात् [तत्] पुच्छम् ॥ २ ॥

अयमेव प्राण उक्थस्यात्मा । न य एवमेतमुक्थस्यात्मानमात्मन् प्रतिष्ठितं वेद स हामुष्मिँल्लोके साङ्गः सतनुः [सर्वः] संभवति ॥ ३ ॥ 15

शश्वद्ध वा अमुष्मिँल्लोके यदिदं पुरुषस्याण्डौ शिश्नं कर्णौ नासिके यत्किंच अनस्थिकं न संभवति ॥ ४ ॥

अथ य एवमेतमुक्थस्यात्मानमात्मन् प्रतिष्ठितं वेद स हैवामुष्मिँल्लोके साङ्गः सतनुः सर्वः संभवति ॥ ५ ॥

तदेतद्वैश्वामित्रमुक्थम् । तदन्नं वै विश्वं प्राणो मित्रम् ॥ ६ ॥ 20

तद्ध विश्वामित्रः श्रमेण तपसा व्रतचर्येण इन्द्रस्य प्रियं धामोपजगाम ॥ ७ ॥

---

2. सद्धः for सन्न°.
5. MyLI. यदन्तम् for यददन्तम्.
10. I. स्तात् द्वा इति for °स्तादवानिति.
14. MyL. साङ्गतः for साङ्गः

तस्मा उ हैतत्प्रोवाच यदिदं मनुष्यानागतम् ॥ ८ ॥

तद्ध स उपनिषसाद । ज्योतिरेतदुक्थमिति ॥ ९ ॥

ज्योतिरिति द्वे अक्षरे । प्राण इति द्वे । अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितम् ॥ १० ॥

5 अथ हैनज्जमदग्निरुपनिषसाद । आयुरेतदुक्थमिति ॥ ११ ॥

आयुरिति द्वे अक्षरे । प्राण इति द्वे । अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितम् ॥ १२ ॥

अथ हैनद्वसिष्ठ उपनिषसाद । गौरेतदुक्थमिति । तदेतदन्नमेव । अन्नं हि गौः ॥ १३ ॥

10 तदाहुर्यदस्य प्राणस्य पुरुषः शरीरम् अथ केनान्ये प्राणाः शरीरवन्तो भवन्तीति ॥ १४ ॥

स ब्रूयाद्यद्वाचा वदति तद्वाचः शरीरम् । यन्मनसा ध्यायति तन्मनसः शरीरम् । यच्चक्षुषा पश्यति तच्चक्षुषः शरीरम् । यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम् । एवमु हान्ये प्राणाः शरीरवन्तो 15 भवन्तीति ॥ १५ ॥

इति तृतीयेऽध्याये प्रथमेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

तदेतदुक्थं सप्तविधं शस्यते । स्तोत्रियोऽनुरूपो धाय्या प्रगाथः 19 सूक्तं निवित् परिधानीया [इति] ॥ १ ॥

---

1. MyLI. तत इदं for यदिदं.
5. PMy. एनं for एनत्.
8. MpLI. तदु for तदे.
10. I. केनान्येन for केनान्ये.
18. My. सप्तविधा for सप्तविधं; My. स्तोत्रीयः for स्तोत्रियः; MyL. before अनुरूपः adds अग्निः
19. MyL. परिधानीयमेव for परिधानीया.

[देवतैव] स्तोत्रियः । अग्निः अनुरूपः । वायुः धाय्या । अन्त-
रिक्षं प्रगाथः । द्यौः सूक्तम् । आदित्यो निवित् । तस्मात् बह्वृचा
उदिते निविदमधीयन्ते । आदित्यो हि निवित् । दिशः परिधानीया ।
इत्यधिदेवतम् ॥ २ ॥

अथाध्यात्मम् । आत्मैव स्तोत्रियः । प्रजानुरूपः । प्राणो धाय्या । 5
मनः प्रगाथः । शिरः सूक्तम् । चक्षुर्निवित् । श्रोत्रं परिधानीया ॥ ३ ॥

तद्धैतदेके त्रिष्टुभा परिदधति । अनुष्टुभैके । त्रिष्टुभा त्वेव
परिदध्यात् ॥ ४ ॥

तद्धैतदेके एता व्याहृतीरभिव्याहृत्य शसन्ति । महान् मह्या
समधत्त । देवो देव्या समधत्त । ब्रह्म ब्राह्मण्या समधत्त । तद्यत् 10
समधत्त समधत्तेति ॥ ५ ॥

तस्मादिदानीं पुरुषस्य शरीराणि प्रतिसंहितानि । पुरुषो ह्येत-
दुक्थम् ॥ ६ ॥

महान् मह्या समधत्तेति । अग्निर्वै महान् । इयमेव मही ॥ ७ ॥

देवो देव्या समधत्तेति । वायुर्वै देवोऽन्तरिक्षं देवी ॥ ८ ॥ 15

ब्रह्म ब्राह्मण्या समधत्तेति । आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी ॥ ९ ॥

तासां वा एतासां देवानां द्वयोर्द्वयोर्देवतयोर्नव नवाक्षराणि
संपद्यन्ते । एतदिमे लोकास्त्रिणवा भवन्ति ॥ १० ॥

तद् ब्रह्म वै त्रिवृत् । तद् ब्रह्माभिव्याहृत्य शंसन्ति । एष उ एव
स्तोमः सोऽनुचरः ॥ ११ ॥ 20

यदिममाहुरेकस्तोम इति अयमेव योऽयं पवते । एषोऽधिदेवतम् ।
प्राणोऽध्यात्मम् । तस्य शरीरमनुचरः ॥ १२ ॥ 22

---

1. P. इयमेव for [देवतैव] see CN.
9. MyLI. after शंसन्ति add तदुक्थं.
15. My. देवा for देवो°; MyI. देवाः for देवी
16. P. ब्रह्मा for ब्रह्म.
17. I. देवतानां for देवाना.
18. My. इमौ लोकौ, L. इमे (मौ) लोके (कौ) I. इमौ लोकौ, for इमे लोका.
20. MyL. सानु° for सोऽनु°.
21. MyL. °दैवतम् for देवतम्.
22. MyLI. °चरन्तम् for चरः

तद्यथा ह वै मणौ मणिसूत्रं संप्रोतं स्याद् एवं हैतस्मिन् सर्वमिदं संप्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः ॥ १३ ॥

**इति तृतीयेऽध्याये प्रथमेऽनुवाके चतुर्थः खण्डः**

---

**पञ्चमः खण्डः**

5 तद्ध मुञ्जः सामश्रवसः प्रययौ । तस्मै ह श्वाजनिर्वैश्यः प्रेयाय ॥ १ ॥

तस्य हान्तरिक्षात् पतित्वा नवनीतपिण्ड उरसि निपपात । तं हादायानुदधौ ॥ २ ॥

ततो हैव स्तोमं ददर्शान्तरिक्षे विततं बहुशोभमानम् । तस्यो ह
10 युक्तिं ददर्श ॥ ३ ॥

बहिष्पवमानमासद्य [ — ] प्राण्य इति कुर्यात् [ — ] अपान्य इति । [विवक्षेतैव] वाचा दिदृक्षेतैवाक्षिभ्याम् । शुश्रूषेतैव कर्णाभ्याम् । स्वयमिदं मनोयुक्तम् ॥ ४ ॥

तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति । तदु वा
15 एतं नोवाप्नुयात् । प इत्येवापान्यात् । तद् यथा बिम्बेन मृगमानयेत् एवमेव एनमेतया देवतयानयति । स युक्तः करोति । एषो एवापि युक्तिः ॥ ५ ॥

**इति तृतीयेऽध्याये प्रथमेऽनुवाके पञ्चमः खण्डः**

19 ॥ प्रथमोऽनुवाकः समाप्तः ॥

---

1. एवं हैतस्मिन् see CN.
5. MyLI. साहश्रवसः for सामश्रवसः
6. MyL. प्रययौ for प्रेयाय.
11. My. आसाद्य for आसद्य see CN. L. प्राह्य for प्राण्य; I. om. प्राण्य.
14. MyL. अस्ति for हिनस्ति.
16. P. एष for एषो.
17. P. युक्तः MyI. अयुक्तिः for युक्ति.

## द्वितीयोऽनुवाकः

### प्रथमः खण्डः

योऽसौ साम्नः प्रत्तिं वेद प्र हास्मै दीयते ॥ १ ॥

ददा इति ह् वा अयमग्निर्दीप्यते । तथेति वायुः पवते । हन्तेति चन्द्रमाः । ओमित्यादित्यः ॥ २ ॥ 5

एषा ह् वै साम्नः प्रत्तिः । एतां ह् वै साम्नः प्रत्तिं सुदक्षिणः क्षैमिर्विदांचकार ॥ ३ ॥

तां हैतां होतुर्वाज्ये गायेत् । मैत्रावरुणस्य वा तां ददा३ तथा३ हन्ता३ हिम्भा ओवा इति । प्र ह् वा अस्मै दीयते ॥ ४ ॥

[सः]अप्यन्यान् बहूनुपर्युपरि य एवमेतां साम्नः प्रत्तिं वेद ॥ ५ ॥ 10

य उ ह् वा अबन्धुर्बन्धुमत्साम वेद यत्र हाप्येनं न विदुर्यत्र रोषन्ति यत्र परीव चक्षते तद्धापि श्रैष्ठ्यमाधिपत्यमन्नाद्यं पुरोधां पर्येति ॥ ६ ॥

अग्निर्हं वा अबन्धुर्बन्धुमत्साम । कस्माद्वा ह्येनं दार्वोः कस्माद्वा पर्यावृत्य मन्थन्ति । स श्रैष्ठ्याय आधिपत्याय अन्नाद्याय पुरोधायै 15 जायते ॥ ७ ॥

स यत्र ह् वा अप्येवंविदं न विदुः यत्र रोषन्ति यत्र परीवचक्षते तद्धापि श्रैष्ठ्यमाधिपत्यमन्नाद्यं पुरोधां पर्येति ॥ ८ ॥

इति तृतीयेऽध्याये द्वितीयेऽनुवाके प्रथमः खण्ड. 19

---

3. MyI. योऽसां साम्नः प्रवृत्तिं for योऽसौ साम्नः प्रत्तिं; MyI. om. वेद .... साम्नः प्रत्तिं L. 6; L. प्रतिं for प्रत्तिं.

6. MyL. प्रवृक्तिः for प्रत्तिः; MyL. प्रवृक्तिं for प्रत्तिं.

10. MyI. प्रवृत्तिं L. प्रक्तिं for प्रत्तिं.

11. MyL. अबन्धु for अबन्धुः

12. MyL. अंन्नाद्यां for अन्नाद्यं.

18. MyI. तथा हि for तद्धापि.

## द्वितीयः खण्डः

स्वयमु तत्र यत्रैनं विदुः ॥ १ ॥

सुदक्षिणो ह वै क्षैमिः प्राचीनशालिः जाबालौ ते ह सब्रह्म-
चारिण आसुः ॥ २ ॥

5 ते हेमे बहुजघ्यस्य चान्यस्य चानूचिरे प्राचीनशालिश्च
जाबालौ च ॥ ३ ॥

अथ ह स्म सुदक्षिणः क्षैमिर्यदेव यज्ञस्याञ्जो यत्सुविदितं तद्ध
स्मैव पृच्छति ॥ ४ ॥

त उ ह वा अपोदिता व्याक्रोशमानाश्चेरुः । शूद्रो दुरनूचान इति
10 ह स्म सुदक्षिणं क्षैमिमाक्रोशन्ति प्राचीनशालिश्च जाबालौ च ॥ ५ ॥

स ह स्माह सुदक्षिणः क्षैमिः यत्र भूयिष्ठाः कुरुपाञ्चालाः
समागता भवितारः तत्र एष संवादो नानुपदृष्टे शूद्रा इव संवदिष्या-
महे इति ॥ ६ ॥

ता उ ह वै जाबालौ दिदीक्षाते शुक्रश्च गोश्रुश्च । तयोर्ह
15 प्राचीनशालिर्वृत उद्गाता ॥ ७ ॥

स तद्ध सुदक्षिणोऽनुबुबुधे जाबालौ हादीक्षिषातामिति । स ह
संग्रहीतारमुवाचानयस्व अरे जाबालौ हादीक्षिषातां तद्गमिष्याव
इति ॥ ८ ॥

19 इति तृतीयेऽध्याये द्वितीयेऽनुवाके द्वितीयः खण्डः

---

3. L. प्राजौनशाः लिजाबालि उतेह for प्राचीन . . . . ते ह; MyI. जाबाला उ ते ह for जाबालौ ते ह; My. ब्रह्म° for सब्रह्म°.
5. MyL. हैमे for हेमे.
7. MyL. सुदक्षिणं for सुदक्षिणः; My. अजः for अञ्जः
9. MyI. अवोदिताः L. अपोजिताः for अपोदिताः; My. प्राक्रोशमानाः, I. अप्याक्रोशमानाः for व्याक्रोशमाना.
12. My. द्रष्टे शूद्रानुव for °दृष्टे शूद्रा इव; L. संपतिष्यामहे for संवदिष्यामहे.
14. L ददीक्षाते for दिदीक्षाते; MyL.गोश्रूश्च for गोश्रुश्च; My.तयोस्तत् for तयोर्ह.
15. MyL व्रत for वृत.
16. & 17. MyI. अदिदीक्षिषाताम् for अदीक्षिषाताम्.
17. MyL. आनया स्वरे for आनयस्व अरे.

## तृतीयः खण्डः

तस्य ह ज्ञातिका अश्रुमुखा इवासुः । अन्यतरां वा अयमुपागादिति ॥ १ ॥

अथ ह स्म वैय्यः पुरा बह्मवाद्यं वदति । अन्यतराम् उपागात् इति ह स्मैनं मन्यते । अथो ह स्मैनम मृतमिति वैवोपासते ॥ २ ॥ 5

तं ह संग्रहीतोवाच । अथ यद् भगवस्ते ताभ्यां न कुशलं तथेत्थमात्थेति ॥ ३ ॥

ओमिति होवाच । गन्तव्यं म आचार्य-सूयमानममन्यतेति ॥ ४ ॥

स ह रथमास्थाय प्रधावयांचकार । तं ह स्म प्रतीक्षन्ते ॥ ५ ॥

कं जानीतेति । सुदक्षिण इति । न वै नूनं स इदमभ्यवेयादिति । स एवेति ॥ ६ ॥ 10

स ह सोपानादेवान्तर्वेद्यवस्थायोवाच अङ्ग न्वित्थं गृहपता३इति । तं ह नानूदतिष्ठासत् । स होवाचानूत्थाता म एधि । कृष्णाजिनोऽसि [इति] । तदिमे कुरुपाञ्चाला अविदुरनूत्थातैव त इति होचुः ॥ ७ ॥

तं ह कनीयान् भ्रातोवाच । अनूत्तिष्ठ । भगव उद्गातारमिति । तं हानूत्तस्थौ ॥ ८ ॥ 15

इति तृतीयेऽध्याये द्वितीयेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

स होवाच । त्रिर्वै गृहपते पुरुषो जायते । पितुरेवाग्रेऽधिजायते । अथ मातुः । अथ यज्ञात् ॥ १ ॥ 20

---

2. MyL. उपागाम् for उपागात्.
4. P. वै यः, My. वैर्यः for वैय्यः
5. MyLI. अमन्यन्ते for मन्यते; P. स्मैनम्मृत्मि for स्मैनममृतमिति; My. [om. इति.
6. I. हथ ग्रही° for ह संग्रही.
7. P. कथे°, My. अथे° for तथे°.
12. I. सोपानदेवतान्तर् for सोपानादेवान्तर्.
13. L. अनूद्धाता मेधि, My. अनूत्थातामेधि for अनूत्थाता म एधि.
14. MyL. add इति after अविदुः
19. स होवाच see CN.

त्रिरु एव म्रियत इति । स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चति । तत्प्रथमं म्रियते ॥ २ ॥

अन्धमिव वै तमो योनिः । लोहितस्तोको वा वै स तदा भवति । अपां वा स्तोकः । किं हि स तदा भवति ॥ ३ ॥

5 स यस्तां देवतां वेद यां च स ततोऽनुसंभवति या चैनं तं मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥ ४ ॥

अथ य एनमेतद्दीक्षयन्ति तद् द्वितीयं म्रियते । वपन्ति केशश्मश्रूणि । निकृन्तन्ति नखान् । प्रत्यञ्जन्त्यङ्गानि । प्रत्यञ्जन्त्यङ्गुलीः । अपवृतोऽपवेष्टित आस्ते । न जुहोति । न यजते । 10 न योषितं चरति । अमानुषीं वाचं वदति । मृतस्य वावैष तदा रूपं भवति ॥ ५ ॥

स यस्तां देवतां वेद, यां च स ततोऽनुसंभवति या चैनं तं मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥ ६ ॥

अथ य एनमेतदस्माल्लोकात् प्रेतं चित्यामादधति तत् तृतीयं 15 म्रियते ॥ ७ ॥

स यस्तां देवतां वेद यां च स ततोऽनुसंभवति या चैनं तं मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥ ८ ॥

एतावद्धैवोक्त्वा रथमास्थाय प्रधावयांचकार ॥ ९ ॥

तं ह जाबालं प्रत्येतं कनीयान् भ्रातोवाच कां भवान् शूद्रको 20 वाचमवादीति । हस्तिना गाधमैषीरिति ॥ १० ॥

---

1. L. त्रिव (त्रिरेव) for त्रिरु एव.
3. L. अण्डम् for अन्धम्.
8. L. प्रत्यजति for प्रत्यञ्जन्ति; P. प्रत्यचत्यङ्गुलीः for प्रत्यञ्जन्त्यङ्गुलीः.
10. My. यौषितः, L. यौषितं for योषितं; MyL. वावै सः for वावैषः.
12. MyL. add का before सः.
17. MyL. ins इति after °वहति.
20. MyI. गाथम् for गाधम्; L. ऐक्षीः for ऐषीः.

प्र हैवैनं तच्छशंस यः कथमवोचद् भगव इति । यस्त्रयाणां मृत्यूनां साम्ना अतिवाहं वेद स उद्गाता मृत्युमतिवहतीति ॥ ११ ॥

इति तृतीयेऽध्याये द्वितीयेऽनुवाके चतुर्थः खण्डः

---

**पञ्चमः खण्डः**

• तं वाव भगवस्ते पितोद्गातारममन्यतेति होवाच । तदु ह 5
प्राचीनशाला विदुर्य एषामयं वृत उद्गातास । तस्मिन् ह नानुविदुः ॥ १ ॥

ते होचुरनुधावत काण्ड्वियवम् इति । तं हानुसस्रुः । ते ह काण्ड्वियवमुद्गातारं चक्रिरे ब्राह्मणं प्राचीनशालिम् ॥ २ ॥

तं हाभ्यवेक्ष्योवाच एवमेष ब्राह्मणो मोघाय वादाय नाम्लायत् ।
स नाणु साम्नोऽन्विच्छतीति । अति हैवैनं तच्चक्रे ॥ ३ ॥ 10

स यद्ध वा एनमेतत्पिता योन्यां रेतोभूतं सिञ्चति आदित्यो हैनं तद्योन्यां रेतोभूतं सिञ्चति । स ह्यस्य तत्र मृत्योरीशे ॥ ४ ॥

अथो यदेवैनमेतत्पिता योन्यां रेतोभूतं सिञ्चति तद्ध वाव स ततोऽनुसंभवति प्राणं च । यदा ह्येव रेतः सिक्तं प्राण आविशति अथ
तत्संभवति ॥ ५ ॥ 15

अथो यदेवैनमेतद्दीक्षयन्ति अग्निर्हैवैनं तद्योन्यां रेतोभूतं सिञ्चति ।
स हैवास्य तत्र मृत्योरीशे ॥ ६ ॥

अथो यामेवैतां विसर्जनीयामाहुतिमध्वर्युर्जुहोति तामेव स ततोऽ-
नुसंभवति । छन्दांसि चैव ॥ ७ ॥ 19

---

6. MyL. सः for आस.
7. MyI. कान्त्या वयम् for कण्ड्वियवम्.
8. MyI. काण्डीयम् for काण्ड्वियवम्.
10. L. तं for तत्.
13. MyL. after सिञ्चति add अथ होवाच.
15. L. after तत्संभवति ॥ add: अथ य एनमेतद्दीक्षयन्ति अग्निर्हैवैनं तद्योन्यां रेतो भूत सिञ्चति स हैवास्य तत्र मृत्योरीशे ।
16. My. यः for यद्.
17. My. after ईशे adds: अथो यदेवैनमेतद्दीक्षयन्ति.

14

अथ य एनमेतदस्माल्लोकात् प्रेतं चित्यामादधति चन्द्रमा हैवैनं तद्योन्यां रेतोभूतं सिञ्चति । स उ हैवास्य तत्र मृत्योरीशे ॥ ८ ॥

अथो यदेवैनमेतदस्माल्लोकात् प्रेतं चित्यामादधति, अथो या एवैता अवोक्षणीया आपस्ता एव ततोऽनुसंभवन्ति प्राणम्वेव । प्राणो
5 ह्यापः ॥ ९ ॥

तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेण आदित्यं मृत्युमतिवहति । वागित्यग्निम् । हुमिति वायुम् । भा इति चन्द्रमसम् ॥ १० ॥

तान् एतान् मृत्यून् साम्नोद्गाता आत्मानं च यजमानं च अति-
10 वहति ओमित्येतेनाक्षरेण प्राणेनामुना आदित्येन ॥ ११ ॥
तस्यैष श्लोकः—

**उतैषां ज्येष्ठ उत वा कनिष्ठः**
**उतैषां पुत्र उत वा पितैषाम् ।**
**एको ह देवो मनसि प्रविष्टः**
15 **पूर्वो ह जज्ञे स उ गर्भोऽन्तः ॥**

इति ॥ १२ ॥

तद्यदेषोऽभ्युक्त इममेव पुरुषं योऽयमाच्छन्नोऽन्तरोमित्येतेनैवाक्षरेण प्राणेनैवामुनैवादित्येन ॥ १३ ॥

इति तृतीयेऽध्याये द्वितीयेऽनुवाके पञ्चमः खण्डः

20 ॥ द्वितीयोऽनुवाकः समाप्तः ॥

---

1. My. एतस्मात् for एतदस्मात्.
4. L. °भवति for °भवन्ति; MyL. before प्राणमु add इति.
7. My, हुतमिति, L. हुम्मिति for हुमिति.
11. I. तस्यैकः for तस्यैष.
17. P. तद्यदेशः for तद्यदेष ; I. अक्षन्नोऽन्त°, L. अच्छन्नन्त°, My. अक्षं ततः for आच्छन्नोऽन्त°.

## तृतीयोऽनुवाकः

### प्रथमः खण्डः

त्रिर्ह वै पुरुषो म्रियते । त्रिर्जायते ॥ १ ॥

स हैतदेव प्रथमं म्रियते यद् रेतः सिक्तं संभूतं भवति । स प्राणमेवाभिसंभवति । आशामभिजायते ॥ २ ॥ 5

अथैतद् द्वितीयं म्रियते यद् दीक्षते । स छन्दांस्येवाभिसंभवति । दक्षिणामभिजायते ॥ ३ ॥

अथैतत् तृतीयं म्रियते । यन्म्रियते स श्रद्धामेवाभिसंभवति । लोकमभिजायते ॥ ४ ॥

तदेतद् त्र्यावृद् गायत्रं गायति । तस्य प्रथमयावृतेममेव लोकं 10 जयति। यदु चास्मिँल्लोके । तदेतेन चैनं प्राणेन समर्धयति । यमभिसंभवति एतां चास्मा आशां प्रयच्छति यामभिजायते ॥ ५ ॥

अथ द्वितीययावृतेदमेवान्तरिक्षं जयति यदु चान्तरिक्षे तदेतैश्चैनं छन्दोभिः समर्धयति यान्यभिसंभवति । एतां चास्मै दक्षिणां प्रयच्छति । यामभिजायते ॥ ६ ॥ 15

अथ तृतीययावृतामुमेव लोकं जयति । यदु चामुष्मिँल्लोके । तदेतया चैनं श्रद्धया समर्धयति ययैवैनमेतच्छ्रद्धया अग्नावभ्यादधति । समयमितो भविष्यतीति । एतं चास्मै लोकं प्रयच्छति यमभिजायते ॥ ७ ॥

इति तृतीयेऽध्याये तृतीयेऽनुवाके प्रथमः खण्डः 20

---

4. I. after म्रियते adds:- त्रिर्जायते । सहैतदेव प्रथमं म्रियते.

10. MyI. त्रिधावृत् for त्र्यावत्; I. गायन्ति for गायति; MyLI. °वृते इमम् for °वृतेमम्.

11. 14 & 17. MyL. समृद्धयति for समर्धयति.

## द्वितीयः खण्डः

एतद्वै तिसृभिरावृद्भिरिमांश्च लोकान् जयति । एतैश्चैनं भूतं समर्धयति । यान्यभि सभवति ॥ १ ॥

अथ वा अतो हिंकारस्यैव । तं ह स्वर्गे लोके सन्तं मृत्यु-
5 रन्वेत्यशनया ॥ २ ॥

श्रीर्वा एषा प्रजापतिः साम्नो यद्धिंकारः । तमिदुद्गाता श्रिया प्रजापतिना हिङ्कारेण मृत्युमपसेधति ॥ ३ ॥

हुम्मेत्याह । मात्र अनुगाः यत्रैतद्यजमान इति हैतत् ॥ ४ ॥

स यथा श्रेयसा सिद्धः पापीयान् प्रतिविजते एवं हैवास्मान्
10 मृत्युः पाप्मा प्रतिविजते ॥ ५ ॥

यन्मेत्याह चन्द्रमा वै मा मासः । एष ह वै मा मासः । तस्मान्मेत्याह । भा इति हैतत् परोक्षेणैव । यस्माद् उ एव मेत्याह । यद्ु एव मेत्याहैतानि त्रीणि । तस्मान्मेति ब्रूयात् ॥ ६ ॥

इति तृतीयेऽध्याये तृतीयेऽनुवाके द्वितीयः खण्डः

---

15

## तृतीयः खण्डः

हुम्भा इति ब्रह्मवर्चसकामस्य । भातीव हि ब्रह्मवर्चसम् ॥ १ ॥

हुम्बो इति पशुकामस्य । बो इति ह पशवो वाश्यन्ते ॥ २ ॥

18 हुम् बगिति श्रीकामस्य । बगिति ह श्रियं पणायन्ति ॥ ३ ॥

---

4. L. अथो for अतो, My. सितं for सन्तं.
6. LI. तदेतदत्, My. तमेत् for तमिद्.
7. My. उपह्वयति for अपसेधति.
8. My. हुमेव for हुम्मेत्याह, P. मात्र नु for मात्र अनु; MyL. before गाः add इति.
10. MyLI. °विचते for °विजते.
12. P. परोक्षोणेव for परोक्षेणैव.
18. L. श्रिया for श्रियं.

हुम्भा ओवा इत्येतदेवोपगीतम् ॥ ४ ॥

महद्दिवाभिपरिवर्तयन् गायेदिति ह स्माह नाको महाग्रामो महानिवेशो भवतीति । स यथा स्थाणुमर्पयित्वा इतरेण वेतरेण वा परियायात् तादृक्तत् ॥ ५ ॥

तदु होवाच शाट्यायनिः । कस्मै कामाय स्थाणुमर्पयेत् । 5 अथोपगीतमेवैतत् । नैवैतदाद्रियेतेति नु हिंकारणाम् ॥ ६ ॥

अथ वा अतो निधनमेव । ओवा इति द्वे अक्षरे । अन्तो वै साम्नो निधनम् । अन्तः स्वर्गो लोकानाम् । अन्तो ब्रध्नस्य विष्टपम् ॥ ७ ॥

तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण अन्ते स्वर्गे लोके 10 दधाति ॥ ८ ॥

य उ ह वा अपक्षो वृक्षाग्रं गच्छति अव वै स ततः पद्यते । अथ यद्वै पक्षी वृक्षाग्रे यदसिधारायां यत् क्षुरधारायाम् आस्ते न वै स ततोऽवपद्यते । पक्षाभ्यां हि संयत आस्ते ॥ ९ ॥

तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वा अन्ते 15 स्वर्गे लोके दधाति । स यथा पक्ष्यबिभ्यदासीत एवमेव स्वर्गे लोके अबिभ्यदास्ते । अथाचरति ॥ १० ॥

ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥ ११ ॥

आदित्य एव देवलोकः । चन्द्रमा मनुष्यलोकः । ओमित्यादित्यो 20 वागिति चन्द्रमाः ॥ १२ ॥

तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण आदित्यं देवलोकं गमयति ॥ १३ ॥

इति तृतीयेऽध्याये तृतीयेऽनुवाके तृतीयः खण्डः 24

---

3. MyLI. इतरे एवेतरेण for इतरेण वेतरेण.

6. I. आद्रियतेति for आद्रियेतेति.

14. L. अप for अव°.

## चतुर्थः खण्डः

तं हागतं पृच्छति । कस्त्वमसीति । स यो ह् नाम्ना वा गोत्रे॰ वा प्रब्रूते । तं हाह । यस्तेऽयं मय्यात्मा अभूदेष ते स इति ॥ १ ।

तस्मिन् हात्मन् प्रतिपत् । तम् ऋतवः संपदार्यपद्गृहीतम् अप
5 कर्षन्ति । तस्य हाहोरात्रे लोकमाप्नुतः ॥ २ ॥

तस्मा उ हैतेन प्रब्रवीत । कोऽहमस्मि । सुवस्त्वम् । स त्वां सुवर्ग्यं सुवरगामिति ॥ ३ ॥

को ह् वै प्रजापतिः । अथ हैवंविदेव सुवर्गः । स हि सुवर्गच्छति ॥ ४ ॥

10 तं हाह । यस्त्वमसि सोऽहमस्मि । योऽहमस्मि स त्वमसि । एहीति ॥ ५ ॥

स एतमेव सुकृतरसं प्रविशति । यदु ह् वा अस्मिँल्लोके मनुष्या यजन्ते यत्साधु कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति । तदमुं चन्द्रमसं मनुष्यलोकं प्रविशति ॥ ६ ॥

15 तस्येदं मानुषं निकाशनमाण्डमुदरेऽन्तः संभवति । तस्योर्ध्वमन्नाद्यमुत्सीदति स्तनावभि । स यदा जायते अथास्मै माता स्तनमन्नाद्यं प्रयच्छति ॥ ७ ॥

अजातो ह् वै तावत्पुरुषो यावन्न यजते स यज्ञेनैव जायते । स
19 यथाण्डं प्रथमनिर्भिण्णमेवमेव ॥ ८ ॥

---

4. MyL. ते for तम्.
6. P. प्रब्रुवीत for प्रब्रवीत; My. स्वर्ग्यं for सुवर्ग्यं see CN.
13. MyI. जायन्ते for यजन्ते.
15. P. मानुष° for मानुषं; LI. after निकाशनम् add इदम्; P. अण्डम् for आण्डम्.
18. MyI. जायते for यजते.

तदा तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेण आदित्यं देवलोकं गमयति । वागित्यस्मा उत्तरेणाक्षरेण चन्द्रमसमन्नाद्यमक्षितिं प्रयच्छति ॥ ९ ॥

अथ यस्यैतदविद्वानुद्गायति न हैवैनं देवलोकं गमयति । नो एनमन्नाद्येन समर्धयति ॥ १० ॥ 5

स यथाण्डं विदिग्धं शयीत अन्नाद्यमलभमानमेवमेव विदिग्धः शेत अन्नाद्यमलभमानः ॥ ११ ॥

तस्मादु हैवंविदमेवोद्गापयेत । एवंविदि हैवोद्गातरिति हूतः प्रतिशृणुयात् ॥ १२ ॥

इति तृतीयेऽध्याये तृतीयेऽनुवाके चतुर्थः खण्डः 10

॥ तृतीयोऽनुवाकः समाप्तः ॥

3. L. प्रयक्षिति for प्रयच्छति.

4. MyL. ना° for न.

6. MyI. विदग्धं for विदिग्धं; MyI. विग्धः for विदिग्धः.

8. MyI. एतत् गावयेत for उद्गापयेत.

### चतुर्थोऽनुवाकः

### प्रथमः खण्डः

वागिति हेन्द्रो विश्वामित्रायोक्थमुवाच । तदेतद्विश्वामित्र उपासते वाचमेव ।। १ ।।

5 मनुर्ह वसिष्ठाय ब्रह्मत्वमुवाच । तस्मादाहुर्वासिष्ठमेव ब्रह्मेति ।। २ ।।

तदु वा आहुः । एवंविदेव ब्रह्मा । क उ एवंविदं वासिष्ठमर्हतीति ।। ३ ।।

प्रजापतिः प्राजिजनिषत । स तपोऽतप्यत ।* स ऐक्षत । हन्त नु

10 प्रतिष्ठां जनयै ततो याः प्रजाः स्रक्ष्ये ता एतदेव प्रतिष्ठास्यन्ति । नाप्रतिष्ठाश्चरन्तीः प्रदधिष्यन्त इति ।। ४ ।।

स इमं लोकमजनयत् अन्तरिक्षलोकममुं लोकमिति । तानिमाँस्त्रीँल्लोकान् जनयित्वाभ्यश्राम्यत् ।। ५ ।।

तान् समतपत् । तेभ्यः संतप्तेभ्यस्त्रीणि शुक्राणि उदायन् । अग्निः

15 पृथिव्या वायुरन्तरिक्षात् आदित्यो दिवः ।। ६ ।।

स एतानि शुक्राणि पुनरभ्येवातपत् । तेभ्यः संतप्तेभ्यः त्रीण्येव शुक्राण्युदायन् । ऋग्वेद एवाग्नेः, यजुर्वेदो वायोः, सामवेद आदित्यात् ।। ७ ।।

स एतानि शुक्राणि पुनरभ्येवातपत् । तेभ्यः संतप्तेभ्यः त्रीण्येव

20 शुक्राणि उदायन् । भूरित्येवर्ग्वेदात् भुव इति यजुर्वेदात् सुवरिति सामवेदात् ।। ८ ।।

---

5. MyI वसिष्ठम् for वासिष्ठम्.
7. My वसिष्ठम्, L. उपासिष्ठम् for वासिष्ठम्.
9. My प्राङ् for प्रा°.
10. MyLI. जनये for जनयै; MyL. ताम् for ताः.
14. MyLI. समभवन् for समतपत्.
16. MyI अपतन्, L. अतपन् for अतपत्.
20. PMyL. स्वर् for सुवर् see CN.

तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिदं सर्वम् । स यो वै त्रयीं विद्यां विदुषो लोकः सोऽस्य लोको भवति । य एवं वेद ॥ ९ ॥

**इति तृतीयेऽध्याये चतुर्थेऽनुवाके प्रथमः खण्डः**

---

### द्वितीयः खण्डः

अयं वाव यज्ञो योऽयं पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येष एतन्मनसा च वर्तते ॥ १ ॥

तस्य होताध्वर्युरुद्गातेत्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति । तस्मात्ते वाचा कुर्वन्ति । ब्रह्मैव मनसान्यतराम् । तस्मात्स तूष्णी-मास्ते ॥ २ ॥

स यद्ध सोऽपि स्तूयमाने वा शस्यमाने वा वावद्यमान आसीत । 10 अन्यतरामेवास्यापि तर्हि स वाचा वर्तनिं संस्कुर्यात् ॥ ३ ॥

स यथा पुरुष एकपाद्यन् भ्रेषन्नेति रथो वैकचक्रो वर्तमान एवमेव तर्हि यज्ञो भ्रेषन्नेति ॥ ४ ॥

एतद्ध तद्विद्वान् ब्राह्मण उवाच । ब्रह्माणं प्रातरनुवाक उपाकृते वावद्यमानमासीनमर्धं वा इमे तर्हि यज्ञस्यान्तरगुरिति । अर्धं हि ते 15 तर्हि यज्ञस्यान्तरीयुः ॥ ५ ॥

तस्माद् ब्रह्मा प्रातरनुवाक उपाकृते वचंयम आसीतापरिधानी-याया आ वषट्कारादितरेषां स्तुतशस्त्राणामेवासंस्थायै पवमानानाम् ॥ ६ ॥

स यथा पुरुष उभयापद्यन् भ्रेषं न न्येति रथो वोभयाचक्रो 20 वर्तमान एवमेतर्हि यज्ञो भ्रेषं न न्येति ॥ ७ ॥

**इति तृतीयेऽध्याये चतुर्थेऽनुवाके द्वितीयः खण्डः**

---

12. MyLI. वर्तमानम् for वर्तमानः.
14. MyLI. उपाक्रतो for उपाकृते.
15. MyL. अर्धन्वा for अर्धं वा.
16. MyL. अन्तर्युः for अन्तरीयुः.
17. MyI कृतो for °कृते.
18. L. संस्थायै, MyI. स्थायै for आसंस्थायै.
20. My उभयाचक्रो for उभयाचक्रो.

## तृतीयः खण्डः

स यदि यज्ञ ऋक्तो भ्रेषन्नियाद् ब्रह्मणे प्रब्रूतेत्याहुः । अथ यदि यजुष्टो ब्रह्मणे प्रब्रूतेत्याहुः । अथ यदि सामतो ब्रह्मणे प्रब्रूतेत्याहुः । अथ यद्यनुपस्मृतात् कुत इदमजनीति ब्रह्मणे प्रब्रूतेवेत्याहुः ॥ १ ॥

5 स ब्रह्मा प्राङ् उदेत्य स्रुवेण अग्नीध्र आज्यं जुहुयात् भूर्भुवः सुवरित्येताभिर्व्याहृतिभिः ॥ २ ॥

एता वै व्याहृतयः सर्वप्रायश्चित्तयः । तद्यथा लवणेन सुवर्ण संदध्यात् सुवर्णेन रजतं, रजतेन त्रपु, त्रपुणा लोहायसं, लोहायसेन कार्ष्णायसं, कार्ष्णायसेन दारु, दारु च चर्म च श्लेष्मणा एवमेवैवं 10 विद्वाँस्तत्सर्वं भिषज्यति ॥ ३ ॥

तदाहुर्यदहौषीत् मे ग्रहान् मेऽग्रहीत् इत्यध्वर्यवे दक्षिणा नयन्ति आशंसीन्मे वषडकृण्म इति । होत्रे उदगासीत् म इत्युद्गात्रे अथ किं चकृषे ब्रह्मणे तूष्णीमासीनाय समावतीरेवेतरैर्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥ ४ ॥

15 स ब्रूयाद् अर्धभाग्घैष यज्ञस्य । अर्धं ह्येष यज्ञस्य वहतीति । अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्यः ॥ ५ ॥

तस्यैष श्लोकः–

**मयीदं मन्ये भुवनादि सर्वं**
20 **मयि लोका मयि दिशश्चतस्रः ।**
**मयीदं मन्ये निमिषद्यदेजति**
22 **मय्याप ओषधयश्च सर्वाः ॥** इति ॥ ६ ॥

---

3. MyLI. यजुषो for यजुष्टो.
5. MyI om. स ब्रह्मा . . . . अग्नीध्र आ°.
8. MyI. विदध्यात् for संदध्यात्.
12. P. अशंसीत् for आशंसीत्; P. अकर्म, L. अक्रन्म for अकृण्म.
13. LI. इतरे for इतरैः
15. P. °भाग्घ वै सः, My °भार्यै ष·, L. °भाग्घ्येष for °भाग्घैषः
16. My. अर्घं for अर्धा.

**मयीदं मन्ये भुवनादि सर्वम्** इत्येवंविदं ह वावेदं सर्वं भुवनमन्वायत्तम् । **मयि लोका मयि दिशश्चतस्रः** इति एवंविदि ह वाव लोकः । एवंविदि दिशश्चतस्रः । **मयीदं मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा** इत्येवंविदि ह वावेदं सर्वं भुवनं प्रतिष्ठितम् ॥ ७ ॥

तस्मादु हैवंविदमेव ब्रह्माणं कुर्वीत । स ह वाव ब्रह्मा य एवं वेद ॥ ८ ॥ 5

इति तृतीयेऽध्याये चतुर्थेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

अथ वा अतः स्तोमभागानामेवानुमन्त्राः ॥ १ ॥

तद्धैतदेके स्तोमभागैरेवानुमन्त्रयन्ते । तत्तथा न कुर्यात् ॥ २ ॥ 10

देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानां प्रसविता सवित्रा प्रसूता इदमनु मन्त्रयामह इति वदन्तः । तदु तथा न कुर्यात् ॥ ३ ॥

भूर्भुवः सुवरित्यु हैकेऽनुमन्त्रयन्त एषा वै त्रयी विद्या । त्रय्यैवेदं विद्ययानुमन्त्रयामह इति वदन्तः । तदु तथा नो एव कुर्यात् ॥ ४ ॥ 15

ओमित्येवानुमन्त्रयेत ॥ ५ ॥

अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः । तेन हैतेन वसिष्ठः प्रजापतिकामोऽनुमन्त्रयांचक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्य भूर्भुवः सुवरोम् इति । ततो वै स बहुप्रजया पशुभिः प्राजायत ॥ ६ ॥ 20

---

5. My. एव for वाव.

10. MyL. नु for न.

19. P. बहुः for बहु.

20. MyL. प्रजायत, for प्राजायत.

स एव तेन वसिष्ठस्यैकस्तोमभागानुमन्त्रेणानुमन्त्रयेत बहुरेव प्रजया पशुभिः प्रजायते । इयं त्वेव स्थितिः । ओमित्येवानुमन्त्रयेत ॥ ७ ॥

इति तृतीयेऽध्याये चतुर्थेऽनुवाके चतुर्थः खण्डः

---

5 पञ्चमः खण्डः

अथैष वाचा वज्रमुद्गृह्णाति । यदाह सोमः पवत इति वोपावर्तध्वमिति वा वाचैव तद्वाचो वज्रं विगृह्यते वाचः सत्येनातिमुच्यते । तस्मात् ओमित्येवानुमन्त्रयेत ॥ १ ॥

देवा वा अनया त्रय्या सरसयोर्ध्वाः स्वर्गं लोकमुदक्रमात् । ते
10 मनुष्याणामन्वागमाद्बिभ्यतस्त्रयं वेदमपीळयन् ॥ २ ॥

तस्य पीळयन्त एकमेवाक्षरं नाशक्नुवन् पीळयितुम् ओम् इति यदेतत् ॥ ३ ॥

एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥ ४ ॥

15 स यां ह वै त्रय्या विद्यया सरसया जितिं जयति यामृद्धिमृद्ध्नोति तां जितिम्; ऋध्नोति तामृद्धिम् । य एवं वेद ॥ ५ ॥

एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा । ओमिति वै होता प्रतिष्ठितः । ओमित्यध्वर्युः । ओमित्युद्गाता ॥ ६ ॥

एतद्ध वा अक्षरं वेदानां त्रिविष्टपम् । एतस्मिन् वा अक्षरे
20 ऋत्विजो यजमानमाधाय स्वर्गे लोके समुद्वहन्ति । तस्मादोमित्येवानुमन्त्रयेत ॥ ७ ॥

इति तृतीयेऽध्याये चतुर्थेऽनुवाके पञ्चमः खण्डः

23 ॥ चतुर्थोऽनुवाकः समाप्तः ॥

---

1. य एतेन for एव तेन; MyL. °मन्त्रयते for °मन्त्रयेत.

6. MyL. यः for यद्.

## पञ्चमोऽनुवाकः

### प्रथमः खण्डः

गुहासि देवोऽसि उप वास्युप तं वायस्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १ ॥

महिनासि बहुलासि बृहत्यसि रोहिण्यसि अपन्नासि ॥ २ ॥ 5

संभूर्देवोऽसि । समहं भूयासम् । आभूतिरसि । आभूयासम् । भूतिरसि भूयासम् ॥ ३ ॥

यास्ते प्रजा उपदिष्टाः । नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ ४ ॥

नाम मे । शरीरं मे । प्रतिष्ठा मे । तन्मे त्वयि । तन्मे मोऽपहृथा 10 इति इमां पृथिवीमवोचत् ॥ ५ ॥

तमियमागतं पृथिवी प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोक इति ॥ ६ ॥

यद्वाव मे त्वयीत्याह । यद्वाव मे पुनर्देहीति ॥ ७ ॥

किं नु ते मयीति । नाम मे शरीरं मे प्रतिष्ठा मे । तन्मे त्वयि 15 तन्मे पुनर्देहीति । तदस्मा इयं पृथिवी पुनर्ददाति ॥ ८ ॥

तामाह । प्र मा वहेति । किमभीति अग्निमिति । तमग्नि-मभिप्रहति ॥ ९ ॥

सोऽग्निमाहाभिजिदस्यभिजय्यासम् । लोकजिदसि । लोकं जय्यासम् । अत्रिरसि । अन्नम् अद्यासम् । अन्नादो भवति । यस्तु 20 एवं वेद ॥ १० ॥

---

3. My. देवोऽस्मि, L. देवास्मि for देवोऽसि; MyL. वाप्युप for वास्युप; My वसस्वि, L. वयस्वी for वायस्व.
5. MyL. महिकासि for महिनासि.
6. My. आभूरिति कस्य, L. आभूरिति रस्य for आभूतिरसि.
13. MyL. om. ह.
16. My. तस्मा for तदस्मा.
19. My. after °जय्यासं adds एव.

संभूर्देवोऽसि । समहं भूयासम् । आभूतिरसि । आभूयासम् । भूतिरसि । भूयासम् ॥ ११ ॥

यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ १२ ॥

तपो मे तेजो मे अन्नं मे वाङ् मे । तन्मे त्वयि । तन्मे मोपहृथा इत्यग्निमवोचत् ॥ १३ ॥

तं तथैवागतमग्निः प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोक इति ॥ १४ ॥

यद्वाव मे त्वयीत्याह । तद्वाव मे पुनर्देहीति ॥ १५ ॥

10 किन्नु ते मयीति । तपो मे तेजो मे अन्नं मे वाङ् मे । तन्मे त्वयि । तन्मे पुनर्देहीति । [तद्] अस्मा अग्निः पुनर्ददाति ॥ १६ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके प्रथमः खण्डः

---

## द्वितीयः खण्डः

तमाह । प्र मा वहेति । किमभीति । वायुमिति । तं वायुमभि-
15 प्रवहति ॥ १ ॥

स वायुमाह । यत् पुरस्ताद्वासि इन्द्रो राजा भूतो वासि । यद्दक्षिणतो वासि ईशानो भूतो वासि । यत्पश्चाद्वासि वरुणो राजा भूतो वासि । यदुत्तरतो वासि सोमो राजा भूतो वासि । यदुपरिष्टाद्वासि प्रजापतिर्भूतो वासि ॥ २ ॥

20 व्रात्योऽस्येकव्रात्योऽनवसृष्टो देवानां बिलमप्यधा ॥ ३ ॥

---

11. My. तस्मात् for तदस्मा.
14. तमाह see CN.
19. P. °ष्टादववासि . . . भूतोऽववासि for °ष्टाद्वासि . . . भूतो वासि.
20. MyL. वधि: for अप्यधा.

तव प्रजास्तवौषधयस्तवापो विचलितमनु विचलन्ति ॥ ४ ॥

संभूर्देवोऽसि समहं भूयासम् । आभूतिरसि आभूयासम् । भूतिरसि भूयासम् ॥ ५ ॥

यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ ६ ॥ 5

प्राणापानौ मे । श्रुतं मे । तन्मे त्वयि । तन्मे मोपहृथा इति वायुमवोचत् ॥ ७ ॥

तं तथैवागतं वायुः प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोकः इति ॥ ८ ॥

यद्वाव मे त्वयीत्याह तद्वाह मे पुनर्देहीति ॥ ९ ॥ 10

किं नु मयीति । प्राणापानौ मे । श्रुतं मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै वायुः पुनर्ददाति ॥ १० ॥

तमाह प्र मा वहेति । किमभीति । अन्तरिक्षलोकमिति । तमन्तरिक्षलोकमभिप्रवहति ॥ ११ ॥

तं तथैवागतमन्तरिक्षलोकः प्रतिनन्दति । अयं ते भगवो लोकः । 15 स ह नावयं लोक इति ॥ १२ ॥

यद्वाव मे त्वयीत्याह । तद्वाव मे पुनर्देहीति ॥ १३ ॥

किं नु ते मयीति । अयं मे आकाशः स मे त्वयि । तन्मे पुनर्देहीति । तमस्मा आकाशमन्तरिक्षलोकः पुनर्ददाति ॥ १४ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके द्वितीयः खण्डः 20

---

## तृतीयः खण्डः

तमाह । प्र मा वहेति । किमभीति । दिश इति । तं दिशोऽभिप्रवहति ॥ १ ॥ 23

---

19. My. तस्मा for तमस्मा.
22. MyL. तद् for तं.

तं तथैवागतं दिशः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स ह नोऽयं लोकः इति ॥ २ ॥

यद्वाह मे युष्मास्वित्याह । तद्वाह मे पुनर्दत्तेति ॥ ३ ॥

किं नु तेऽस्मास्विति । श्रोत्रमिति । तदस्मै श्रोत्रं दिशः
5 पुनर्ददति ॥ ४ ॥

ता आह प्र मा वहतेति । किमभीति । अहोरात्रयोर्लोकमिति । तमहोरात्रयोर्लोकमभिप्रवहन्ति ॥ ५ ॥

तं तथैवागतमहोरात्रे प्रतिनन्दतः । अयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥ ६ ॥

10 यद्वाह मे युवयोरित्याह । तद्वाह मे पुनर्दत्तमिति ॥ ७ ॥

किं नु ते आवयोरिति । अक्षितिरिति । तामस्मा अक्षिति-महोरात्रे पुनर्दत्तः ॥ ८ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके तृतीयः खण्डः

---

## चतुर्थः खण्डः

15 ते आह प्र मा वहतमिति । किमभीति । अर्धमासानिति । तमर्धमासानभिप्रवहतः ॥ १ ॥

तं तथैवागतमर्धमासाः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥ २ ॥

यद्वाव मे युष्मास्वित्याह तद्वाह मे पुनर्दत्तेति ॥ ३ ॥

20 किं नु तेऽस्मास्विति । इमानि क्षुद्राणि पर्वाणि । तानि मे युष्मासु । तानि मे प्रति संधत्तेति । तान्यस्यार्धमासाः पुनः प्रति संधदति ॥ ४ ॥

तानाह । प्र मा वहतेति । किमभीति । मासानिति । तं
24 मासानभिप्रवहन्ति ॥ ५ ॥

---

7. My. तद् for तं.

तं तथैवागतं मासाः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स नोऽयं लोक इति ॥ ६ ॥

यद्वाव मे युस्मास्वित्याह । तद्वाव मे पुनर्दत्तेति ॥ ७ ॥

किं नु तेऽस्मास्विति । इमानि स्थूलानि पर्वाणि । तानि मे प्रति संधत्तेति । तान्यस्य मासाः पुनः प्रति संदधति ॥ ८ ॥ 5

इति तृतीयेऽध्याये पञ्चमेऽनुवाके चतुर्थः खण्डः

---

पञ्चमः खण्डः

तानाह । प्र मा वहतेति । किमभीति । ऋतुनिति । तमृतूनभिप्रवहन्ति ॥ १ ॥

तं तथैवागतमृतवः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥ २ ॥ 10

यद्वाव मे युष्मास्वित्याह । तद्वाव मे पुनर्दत्तेति ॥ ३ ॥

किं नु तेऽस्मास्विति । इमानि ज्यायांसि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्यर्तवः पुनः प्रतिसंधदति ॥ ४ ॥

तानाह । प्र मा वहतेति । किमभीति । तत् संवत्सरमिति । 15 तं संवत्सरमभिप्रवहन्ति ॥ ६ ॥

तं तथैवागतं संवत्सरः प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोक इति ॥ ६ ॥

यद्वाव मे त्वयीत्याह तद्वाव मे पुनेदहीति ॥ ७ ॥

किं नु ते मयीति । अयं मे आत्मा । स मे त्वयि । तन्मे 20 पुनर्देहीति । तमस्मा आत्मानं संवत्सरः पुनर्ददाति ॥ ८ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके पञ्चमः खण्डः

---

## षष्ठः खण्डः

तमाह् । मा प्र वहेति । किमभीति । दिव्यान् गन्धर्वानिति । तं दिव्यान् गन्धर्वानभिप्रवहृति ॥ १ ॥

तं तथैवागतं दिव्याः गन्धर्वाः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स हृ नोऽयं लोक इति ॥ २ ॥

यद्वाह् मे युष्मास्वित्याह् । तद्वाव मे पुनर्दत्तेति ॥ ३ ॥

किं तेऽस्मास्विति । गन्धो मे मोदो मे प्रमोदो मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति । तदस्मै दिव्या गन्धर्वाः पुनर्ददति ॥ ४ ॥

तानाह् । प्र मा वहृतेति । किमभीति । अप्सरस इति । तमप्सरसोऽभिप्रवहृन्ति ॥ ५ ॥

तं तथैवागतमप्सरसः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स हृ नोऽयं लोक इति ॥ ६ ॥

यद्वाव मे युष्मास्वित्याह् । तद्वाह् मे पुनर्दत्तेति ॥ ७ ॥

किं नु तेऽस्मास्विति । हसो मे क्रीळा मे मिथुनं मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति । तदस्मा अप्सरसः पुनर्ददति ॥ ८ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके षष्ठः खण्डः

---

## सप्तमः खण्डः

ता आहृ । प्र मा वहृतेति । किमभीति । दिवमिति । तं दिवमभिप्रवहृन्ति ॥ १ ॥

तं तथैवागतं द्यौः प्रतिनन्दति । अयं ते भगवो लोकः । स हृ नावयं लोक इति ॥ २ ॥

यद्वाव मे त्वयीत्याहृ । तद्वाव मे पुनर्देहीति ॥ ३ ॥

किं नु ते मयीति । तृप्तिरिति । सकृत्तृप्तेव ह्येषा । तामस्मै तृप्तिं द्यौः पुनर्ददाति ॥ ४ ॥

तमाह । प्र मा वहेति । किमभीति । देवानिति । तं देवानभिप्रवहति ॥ ५ ॥

तं तथैवागतं देवाः प्रतिनन्दन्ति । अयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥ ६ ॥

यद्वाव मे युष्मास्वित्याह । तद्वाव मे पुनर्दत्तेति ॥ ७ ॥ 5

किं नु तेऽस्मास्विति । अमृतमिति । तदस्मा अमृतं देवाः पुनर्ददति ॥ ८ ॥

इति तृतीयेऽध्याये पञ्चमेऽनुवाके सप्तमः खण्डः

---

**अष्टमः खण्डः**

तानाह । प्र मा वहतेति । किमभीति । आदित्यमिति । 10
तमादित्यमभिप्रवहन्ति ॥ १ ॥

स आदित्यमाह । विभुः पुरस्तात् संपत् पश्चात् । सम्यङ् त्वमसि । समीचो मनुष्यानरोषी रुषतस्त ऋषिः पाप्मानं हन्ति । अपहतपाप्मा भवति यस्त्वेवं वेद ॥ २ ॥

संभूर्देवोऽसि । समहं भूयासम् । आभूतिरसि । आभूयासम् । 15
भूतिरसि । भूयासम् ॥ ३ ॥

यास्ते प्रजा उपदिष्टाः नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥ ४ ॥

ओजो मे । बलं मे । चक्षुर्मे । तन्मे त्वयि । तन्मे मोपहृथा इत्यादित्यमवोचत् ॥ ५ ॥ 20

तं तथैवागतमादित्य· प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोक इति ॥ ६ ॥ 22

---

4. I. नैकः for लोकः.

13. Myl. करोषि L. करोति for अरोषी·; Myl. रुशतः. L. रिषतः for रुषतः.

15. MyLI. संभूतिः for संभू..

यद्वाव मे त्वयीत्याह । तद्वाव मे पुनर्देहीति ।। ७ ।।

किं नु ते मयीति । ओजो मे । बलं मे । चक्षुर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मा आदित्यः पुनर्ददाति ।। ८ ।।

तमाह । प्र मा वहेति । किमभीति । चन्द्रमसमिति । तं 5 चन्द्रमसमभिप्रवहति ।। ९ ।।

स चन्द्रमसमाह । सत्यस्य पन्था न त्वा जहाति । अमृतस्य पन्था न त्वा जहाति ।। १० ।।

नवो नवो भवसि जायमानो भरो नाम ब्राह्मण उपास्से । तस्मात्ते सत्या उभये देवमनुष्या अन्नाद्य भरन्ति । अन्नादो भवति 10 यस्त्वेवं वेद ।। ११ ।।

संभूर्देवोऽसि । समहं भूयासम् । आभूतिरसि । आभूयासम् । भूतिरसि । भूयासम् ।। १२ ।।

यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ।। १३ ।।

15 मनो मे । रेतो मे । प्रजा मे । पुनः संभूतिर्मे । तन्मे त्वयि । तन्मे मोपहृथा इति चन्द्रमसमवोचत् ।। १४ ।।

तं तथैवागतं चन्द्रमाः प्रतिनन्दति । अयं ते भगवो लोकः । स ह नावयं लोक इति ।। १५ ।।

यद्वाव मे त्वयीत्याह । तद्वाव मे पुनर्देहीति ।। १६ ।।

20 किं नु ते मयीति । मनो मे । रेतो मे । प्रजा मे । पुनः संभूतिर्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै चन्द्रमाः पुनर्ददाति ।। १७ ।।

**इति तृतीयेऽध्याये पञ्चमेऽनुवाके अष्टमः खण्डः**

---

6. I. om. अमृतस्य . . . . सभूर्देवोऽसि (L. 11.).
8. My. om. नवो नवो . . °र्देवोऽसि, (L. 11).
15. I. तन्ममोप° for तन्मे मोप°.

## नवमः खण्डः

तमाह । प्र मा वहेति । किमभीति । ब्रह्मणो लोकमिति । तमादित्यमभिप्रवहति ॥ १ ॥

स आदित्यमाह । प्र मा वहेति । किमभीति । ब्रह्मणो लोकमिति । तं चन्द्रमसमभिप्रवहति । स एवमेते देवते अनुसंचरति ॥ २ ॥ 5

एषोऽन्तोऽतः परः प्रवाहो नास्ति । यानु कांश्चातः प्राचो लोकानभ्यवादिष्म ते सर्व आप्ता भवन्ति । ते जिताः तेष्वस्य सर्वेषु कामचरो भवति । य एवं वेद ॥ ३ ॥

स यदि कामयेत । पुनरिहाजायेयेति । यस्मिन् कुले अभिध्यायेत् । यदि ब्राह्मणकुले यदि राजकुले तस्मिन्नाजायते । स एतमेव 10 लोकं पुनः प्रजानन्नभ्यारोहन्नेति ॥ ४ ॥

तदु होवाच शाट्यायनिः । बहुव्याहितो वा अयं बहुशो लोकः । एतस्य वै कामाय नु वा ब्रुवते श्राम्यन्ति वा क एतत् प्राप्य पुनरिहेयात् । अत्रैव स्यादिति ॥ ५ ॥

15

इति तृतीयेऽध्याये पञ्चमेऽनुवाके नवमः खण्डः

॥ इति पञ्चमोऽनुवाकः समाप्तः ॥

---

4. MyI. प्रथमो for ब्रह्मणो.
5. My. एतदेव ते for एते देवते.
   [r] नेष सर्वे for ते सर्वे.

## षष्ठोऽनुवाकः

### प्रथमः खण्डः

उच्चैःश्रवा ह कौपयेयः कौरव्यो राजास । तस्य ह केशी दार्भ्यः पाञ्चालो राजा स्वस्रीय आस । तौ हान्योन्यस्य प्रियावासतुः ॥ १ ॥

5 स होच्चैःश्रवाः कौपयेयोऽस्माल्लोकात् प्रेयाय । तस्मिन् ह प्रेते केशी दार्भ्योऽरण्ये मृगयांचचाराप्रियं विनिनीषमाणः ॥ २ ॥

स ह तथैव पल्ययमानो मृगान् प्रसरन्नन्तरेणैवोच्चैःश्रवसं कौपयेयमधिजगाम ॥ ३ ॥

तं होवाच । दृप्यामि स्वी३ज्जानामीति । न दृप्यसीति

10 होवाच । जानासि स एवास्मि यं मा मन्यस इति ॥ ४ ॥

अथ यद्भगव आहुरिति होवाच । य आविर्भवति अन्येऽस्य लोकमुपयन्तीति । अथ कथमशको म आविर्भवितुमिति ॥ ५ ॥

ओमिति होवाच । यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आविरभूवम् । अप्रियं चास्य विनेष्यामि । अनु चैनं शासिष्या-

15 मीति ॥ ६ ॥

तथा भगव इति होवाच । तं वै नुत्वा परिष्वजा इति । तं ह स्म परिष्वजमानो यथा धूमं वा पीयात् वायु वाकाशं वाग्न्यर्चिं वापो वैवं ह स्मैनं व्येति । न ह स्मैनं परिष्वङ्गायोपलभते ॥ ७ ॥

19 इति तृतीयेऽध्याये षष्ठेऽनुवाके प्रथमः खण्डः

---

3. & 5. I. कौवयेयः for कौपयेयः.

6. My. °चकार प्रियं for चचाराप्रियं.

8. My. कौरवयेयम् I. कौवयेयं for कौपयेयम्.

9. L. द्रव्यामि for दृप्यामि.

12. MyI. भवितुमर्हति for भवितुमिति.

## द्वितीयः खण्डः

स होवाच । यद्वै ते पुरा रूपमासीत् तत्ते रूपम् । न तु त्वा परिष्वङ्गायोपलभ इति ॥ १ ॥

ओमिति होवाच । ब्राह्मणो वै मे साम विद्वान् साम्नोदगायत् । स मेऽशरीरेण साम्ना शरीराण्यधूनोत् । तद्यस्य वै किल साम विद्वान् 5
सम्नोद्गायति देवतानामेव सलोकतां गमयतीति ॥ २ ॥

पतङ्गः प्राजापत्य इति होवाच । प्रजापतेः प्रियः पुत्र आस । तस्मा एतत् सामाब्रवीत् । तेन सः ऋषीणामुदगायत् । त एत ऋषयो धूतशरीरा इति ॥ ३ ॥

एतेनो एव साम्नेति होवाच । प्रजापतिर्देवानामुदगायत् । 10
त एत उपरि देवा धूतशरीरा इति ॥ ४ ॥

तस्मिन् हैनमनुशशास । तं हानुशिष्योवाच । यः स्मैवैतत् साम विद्यात् स स्मैव त उद्गायत्विति ॥ ५ ॥

स हानुशिष्ट आजगाम । स ह स्म कुरुपाञ्चालानां ब्राह्मणा-
नुपपृच्छमानश्चरति ॥ ६ ॥ 15

इति तृतीयेऽध्याये षष्ठेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि । स यो वस्तत्साम वेद यदहं वेद स एव मे उद्गास्यति । मीमांसध्वमिति ॥ १ ॥

तस्मै ह मीमांसमानानामेकश्च न संप्रत्यभिदधाति ॥ २ ॥ 20

---

2. MyLI. ने तु पीप्वङ्गोयोपलभते for न तु त्वा . . . उपलभे.

4. उद्गायत् for उदगायत्.

14. MyL. °शिष्टा for शिष्टः.

18. MyLI. यदि त्वं तत्साम वेत्थ for यो वस्तत्साम वेद

स ह् तथैव पल्ययमानः श्मशाने साधने उपावृतिशयानमुपाधा-
वयांचकार । तं ह् च्छाया न प्रजहौ ॥ ३ ॥

तं होवाच । कोऽसीति । ब्राह्मणोऽस्मि । प्रातृदो भाल्ल
इति ॥ ४ ॥

5 स किं वेत्थेति । सामेति ॥ ५ ॥

ओमिति होवाच । व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणोऽस्मि ।
स यदि त्वं तत्साम वेत्थ यदहं वेद त्वमेव म उद्गास्यसि । मीमांस-
स्वेति ॥ ६ ॥

तस्मै ह मीमांसमानस्तदेव संप्रत्यभिदधौ ॥ ७ ॥

10 तं होवाच । अयं म उद्गास्यति इति ॥ ८ ॥

तस्मै ह कुरुपाञ्चालानां ब्राह्मणा असूयन्त आहुः । एषु ह वा
अयं कुल्येषु सत्सूद्गास्यति । कस्मा अयमलमिति ॥ ९ ॥

अलं न्वै मह्यमिति ह स्माह । सैवालं मस्यालं मतायैद्गतस्य
हालम् एवोज्जगौ । तस्मादालम्यैलाजोद्गातेत्याख्यापयन्ति ॥ १० ॥

15 **इति तृतीयेऽध्याये षष्ठेऽनुवाके तृतीयः खण्डः**

---

## चतुर्थः खण्डः

तद्ध सात्यकीर्ता आहुः । यां वयं देवतामुपास्मह एकमेव वयं
तस्यै देवतायै रूपं गव्यादिशाम एकं वाहन एकं हस्तिनि एकं पुरुष
19 एकं सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥ १ ॥

---

1. MyLI. श्मश्रूणां for श्मशाने; P. वा वने for साधने see CN.; P. वावृती, L. उपाव्रती for उपावृति°.
2. P. चायमानः, MyI. जाया न for च्छाया न.
3. MyI. प्रातृर्दो°, L. प्रामृदो for प्रातृदो°.
7. P. om. त्वं.
12. MyLI. कुलेषु for कुल्येषु.
13. I. सैवालममस्यालममतायैः तत हालमम for सैवालं .... हालम् see CN
14. MyLI. आह्वापयन्ति for आख्यापयन्ति.

तदेतदेकमेव रूपं प्राण एव । यावद्ध्येव प्राणेन प्राणिति ताव-
द्रूपं भवति । तद्रूपं भवति ॥ २ ॥

तदथ यदा प्राण उत्क्रामति दार्वेवेव भूतोऽनर्थ्यः परिशिष्यते । न
किञ्चन रूपम् ॥ ३ ॥

तस्यान्तरात्मा तपः । तस्मात्तप्यमानस्योष्णतरः प्राणो 5
भवति ॥ ४ ॥

तपसोऽन्तरात्माग्निः । स निरुक्तः । तस्मात् स दहति ॥ ५ ॥

अथाधिदैवतम् । इयमेवैषा देवता योऽयं पवते । तस्मिन्ने-
तस्मिन्नापोऽन्तः । तदन्नम् । सोऽरूक्ष उपासितव्यः । यदस्मिन्नापोऽन्त-
स्तेनारूक्षः ॥ ६ ॥ 10

तस्यान्तरात्मा तपः । तस्मादेष आतपत्युष्णतरः पवते ॥ ७ ॥

तपसोऽन्तरात्मा विद्युत् । स निरुक्तः । तस्मात् सोऽपि
दहति ॥ ८ ॥

तानि वा एतानि चत्वारि साम प्राणो वाङ् मनः स्वरः ।
स एष प्राणो वाचा करोति मनोनेत्रः । तस्य स्वर एव प्रजाः । 15
प्रजावान् भवति । य एवं वेद ॥ ९ ॥

**इति तृतीयेऽध्याये षष्ठेऽनुवाके चतुर्थः खण्डः**

---

## पञ्चमः खण्डः

स यो वायुः प्राण एव सः । योऽग्निर्वागेव सा । यश्चन्द्रमा
मन एव तत् । य आदित्यः स्वर एव सः । तस्मादेतमादित्यमाहुः 20
स्वर एतीति ॥ १ ॥

---

1. Myl. एकरूपं for एव रूपं.
2. L. यद् for तद्.
3. MyLI दार्वेयोव for दार्वेवेव, L. भूतेनर्थः for भूतोऽनर्थ्यः.
6. I. after भवति adds तद्रूप भवति.
8. P. °देवतम् for दैवतम्, I. तस्मात् for तस्मिन्.
20. My. आह for आहुः

स यो ह् वा अमूर्देवता उपास्ते या अमूरधिदैवतं दुरूपा वा एता दुरनुसंप्राप्या इव । कस्तद्वेद यद्येता अनु वा संप्राप्नुयान्न वा ।। २ ।।

अथ य एना अध्यात्ममुपास्ते स ह्रान्तिदेवो भवति । निर्जीर्यन्तीव वा इत एता अस्य वा एताः शरीरस्य सह प्राणेन निर्जीयन्ति । क उ
5 एव तद्वेद यद्येता अनु वा संप्राप्नुयान्न वा ।। ३ ।।

अथ या एना उभयीरेकधा भवन्तीर्वेद स एवानुष्ठ्या साम वेद । स आत्मानं वेद । स ब्रह्म वेद ।। ४ ।।

तदाहुः । प्रादेशमात्राद्वा इत एता एकं भवन्ति । अतो ह्ययं प्राणः स्वर्यं उपर्युपरि वर्तत इति ।। ५ ।।

10 अथ हैक आहुः । चतुरङ्गुलाद्वा इत एता एकं भवन्तीति । अतो ह्येवायं प्राणः स्वर्यं उपर्युपरि वर्तते इति ।। ६ ।।

स एष ब्राह्मणावर्तः । स य एवमेतं ब्रह्मण आवर्त वेद अभ्येनं प्रजाः पशव आवर्तन्ते सर्वमायुरेति ।। ७ ।।

स यो हैवं विद्वान् प्राणेन प्राण्य अपानेन अपान्य मनसैता
15 उभयीर्देवता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तं भवति । सर्व जितम् । न ह्रास्य कश्चन कामोऽनाप्तो भवति । य एवं वेद ।। ८ ।।

इति तृतीयेऽध्याये षष्ठेऽनुवाके पञ्चमः खण्डः

---

## षष्ठः खण्डः

तदेतन्मिथुनं यद्वाक् च प्राणश्च । मिथुनमृक्सामे । आचतुरं
20 वाव मिथुनं प्रजननम् ।। १ ।।

---

1. PL. °देवतं for °दैवतं; I. द्रूववा for दुरूपा वा.
2. I. °प्रापा for °प्राप्या.
8. My. °मात्राद्वि उत for °मात्राद्वा इत; My. भवति for भवन्ति.
9. My. सृत्युपरि, L. स्वय्युपरि for स्वर्यं उपरि.
10. MyL. चतुरङ्गुल इद्वा (इत्वा L.) for चतुरङ्गुलाद्वा.
11. My. स्वत्युपरि, L. स्वय्युपरि for स्वर्यं उपरि; MyLI. om. इति.
12. P. बाह्मण आवर्तः, MyLI. ब्रह्मणावर्तः for ब्राह्मणावर्तः; I. ब्रह्मणावर्तं for ब्रह्मण आवर्तं.
15. P. उभयोः for उभयीः

तद्यत्राद आह सोमः पवत इति वोपावर्तध्वमिनि वा तन् सहैव वाचा मनसा प्राणेन स्वरेण हिंकुर्वन्ति । तद् हिंकारेण मिथुनं क्रियते ॥ २ ॥

सहैव वाचा मनसा प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुनं क्रियते ॥ ३ ॥ 5

तत्सप्तविधं साम्नः । सप्तकृत्व उद्गाता आत्मानं च यजमानं च शरीरात् प्रजनयति ॥ ४ ॥

यादृशस्यो ह वै रेतो भवति तादृशं संभवति यदि वै पुरुषस्य पुरुष एव यदि गोगौंरेव यद्यश्वस्य अश्व एव यदि मृगस्य मृग एव । यस्यैव रेतो भवति तदेव संभवति ॥ ५ ॥ 10

तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रास्यमानं कल्याणतरं कल्याणतरं भवति एवमेव कल्याणतरेण कल्याणतरेण आत्मना संभवति । य एवं वेद ॥ ६ ॥

**इति तृतीयेऽध्याये षष्ठेऽनुवाके षष्ठः खण्ड.**

---

## सप्तमः खण्डः 15

तदेतदृचाभ्यनूच्यते—

**पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।**
**समुद्रे अन्तः कवयो विचक्षते**
**मरीचीनां पदमिच्छन्ति वेधसः ॥**

इति ॥ १ ॥ (ऋ. वे. १०.१७७.१.) 20

---

2. My. हिंकारे, L हिकार for हिंकारेण.

8. MyI. यादृशस्य for यादृशस्यो.

16. In PMyLI. तदेतदृचाभ्यनूच्यते is found in the previous Khanda

17. MyL. अत्तम् for अक्तम्.

**पतङ्गमक्तमिति** । प्राणो वै पतङ्गः । पतन्निव ह्येष्वङ्गेष्वति रथमुदीक्षते । पतङ्ग इत्याचक्षते ॥ २ ॥

**असुरस्य माययेति** । मनो वा असुरम् । तद्धचसुषु रमते । तस्यैष माययाक्तः ॥ ३ ॥

5 **हृदा पश्यन्ति मनसा विपश्चितः** इति । हृदेवं ह्येते पश्यन्ति यन्मनसा विपश्चितः ॥ ४ ॥

**समुद्रे अन्तः कवयो विचक्षत** इति । पुरुषो वै समुद्रः । एवं-विद उ कवयः । स इमां पुरुषेऽन्तर्वाचं विचक्षते ॥ ५ ॥

**मरीचीनां पदमिच्छन्ति वेधस** इति । मरीच्य इव वा एता
10 देवता यदग्निर्वायुरादित्यश्चन्द्रमाः ॥ ६ ॥

न ह वा एतासां देवतानां पदमस्ति । पदेनो ह वै पुनर्मृत्यु-रन्वेति ॥ ७ ॥

तदेतदनन्वितं साम पुनर्मृत्युना । अति पुनर्मृत्युं तरति । य एवं वेद ॥ ८ ॥

15 **इति तृतीयेऽध्याये षष्ठेऽनुवाके सप्तमः खण्डः**

---

## अष्टमः खण्डः

**पतङ्गो वाचं मनसा बिभर्ति**
**तां गन्धर्वोऽवदद् गर्भे अन्तः ।**
**तां द्योतमानां स्वर्यं मनीषाम्**
20 **ऋतस्य पदे कवयो निपान्ति ॥**

इति ॥ १ ॥ (ऋ. वे. १०.१७७.२.)

---

1. My. अङ्गेष्विति for अङ्गेष्वति.
2. I. उदीरताः for उदीक्षते.
7. P. एव for एवं.
11. My. सः for न.

**पतङ्गो वाचं मनसा बिभर्तीति** । प्राणो वै पतङ्गः । स इमां वाचं मनसा बिभर्ति ॥ २ ॥

**तां गन्धर्वोऽवदद् गर्भे अन्तः** इति । प्राणो वै गन्धर्वः । पुरुष उ गर्भः । स इमां पुरुषे अन्तर्वाचं वदति ॥ ३ ॥

**तां द्योतमानां स्वर्यं मनीषाम्** इति । स्वर्या ह्येषा मनीषा यद्वाक् ॥ ४ ॥ 5

**ऋतस्य पदे कवयो निपान्ति** इति । ओमित्येतदेवाक्षरमृतम् । मनो वा ऋतम् । एवंविद उ कवयः । तेन यदृचं मीमांसन्ते यद्यजुः यत्साम तदेनां निपान्ति ॥ ५ ॥

इति तृतीयेऽध्याये षष्ठेऽनुवाके अष्टमः खण्डः 10

---

## नवमः खण्डः

**अपश्यं गोपामनिपद्यमानम्**
**आ च परा च पथिभिश्चरन्तम् ।**
**स सध्रीचीः स विषूचीर्वसान**
**आ वरीवर्त्ति भुवनेष्वन्तः ॥** 15

इति ॥ १ ॥ (ऋ. वे. १०.१७७.३)

**अपश्यं गोपामनिपद्यमानम्** इति । प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति ॥ २ ॥

**आ च परा च पथिभिश्चरन्तम्** इति । तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चरति ॥ ३ ॥ 20

**स सध्रीचीः स विषूचीर्वसान** इति । सध्रीचीश्च ह्येष एतद्-विषूचीश्च प्रजा वस्ते ॥ ४ ॥ 22

---

3 MyL. वदति for अवदद्

4. गर्भे अन्त. for गर्भ

7. MyLI. trans. ओमित्येतदेवाक्षरमृतम् after यत्साम and P after कवयः

22 MyL, प्रजासस्ते for प्रजा वस्ते.

**आ वरीवर्ति भुवनेष्वन्तः** इति । एष ह्येवैषु भुवनेष्वन्तरा-
वरीवर्ति ॥ ५ ॥

स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति
नैवोद्गातुश्चोपगातॄणां च विज्ञायते । इत एवोर्ध्वः स्वर उदेति । स
5 उपरि मूर्ध्नो लेलायति ॥ ६ ॥

स विद्यादागमदिन्द्रः नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यत
इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥ ७ ॥

तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कञ्चन भ्रातृव्यं पश्यते ।
स यथेन्द्रो न कंचन भ्रातृव्यं पश्यते एवमेव न कंचन भ्रातृव्यं पश्यते ।
10 य एतदेवं वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ८ ॥

**इति तृतीयेऽध्याये षष्ठेऽनुवाके नवमः खण्डः**

॥ षष्ठोऽनुवाकः समाप्तः ॥

---

3. MyI. यदेषः for यदैषः.
4. P. स्वर् for स्वरः.
6. MyL. आगत् for आगमत्.
8. MyI. सामाह् for साम न ह.

## सप्तमोऽनुवाकः

### प्रथमः खण्डः

प्रजापतिं ब्रह्मासृजत । तमपश्यममुखमसृजत ॥ १ ॥

तमप्रपश्यममुखं शयानं ब्रह्माविशत् । पुरुष्यं तत् । प्राणो वै ब्रह्म । प्राणो वावैनं तदाविशत् ॥ २ ॥ 5

स उदतिष्ठत् प्रजानां जनयिता । तं रक्षांस्यन्वसचन्त ॥ ३ ॥

तमेतदेव साम गायन्नत्रायत । यद् गायन्नत्रायत तद् गायत्रस्य गायत्रत्वम् ॥ ४ ॥

त्रायत एनं सर्वस्मात् पाप्मनो मुच्यते य एवं वेद ॥ ५ ॥

**तम् उपास्मै गायता नर** (सा. ६५१) इत्यृचा आश्रवणीयेनोपागायन् ॥ ६ ॥ 10

**यत् उपास्मै गायता नर** इति तेन गायत्रमभवत् । तस्मादेषैव प्रतिपत् कार्या ॥ ७ ॥

**पवमानायेन्दावा अभिदेवमिया-हुम्-भाक्षाता** इति षोडशाक्षराण्यभ्यगायन्त । षोडशकलं वै ब्रह्म । कलाश एवैनं तद् ब्रह्माविशत् ॥ ८ ॥ 15

तदेतच्चतुर्विंशत्यक्षरं गायत्रम् । अष्टाक्षरः प्रस्तावः । षोडशाक्षरं गीतम् । तच्चतुर्विंशतिः संपद्यन्ते । चतुर्विंशत्यर्धमासः संवत्सरः । संवत्सरः साम ॥ ९ ॥

ता ऋचः शरीरेण मृत्युरन्वैत् । तद्यच्छरीरवत्तन्मृत्योराप्तम् । 20 अथ यदशरीरं तदमृतम् । तस्याशरीरेण साम्ना शरीराण्यधूनोत् ॥ १० ॥

**इति तृतीयेऽध्याये सप्तमेऽनुवाके प्रथमः खण्डः**

---

3. MyI. अपश्यम्मुमे, L. अपश्यम्मुखम् for अपश्यममुखम्.
4. MyLI. पुरुषं for पुरुष्यं.
5. My. प्राणेन for प्राणो.
10. MyLI. श्रवसीयेन for आश्रवणीयेन.
15. L. °कला for °कलं.
18. MyLI. °मासा: for °मासः.
20. MyLI. तम् for ताः; PL. अन्वैतत् for अन्वैत्.

## द्वितीयः खण्डः

ओवा३ च् ओवा३ च् हुंभा ओवा३ च् ओवा इति षोडशाक्षराण्य-
भ्यगायत । षोडशकलो वै पुरुषः । कलाश एवास्य तच्छरीराण्य-
धूनोत् ॥ १ ॥

5 स एषोऽपहतपाप्मा धूतशरीरः । तदेतत्क्रियावृत्तियुदासज्ञा-
यत्यो इत्युदास । आ इति आवृद्यात् । वागिति तद् ब्रह्म । तदि-
दमन्तरिक्षम् । सोऽय वायुः पवते । हुमिति चन्द्रमाः । भा इत्या-
दित्यः ॥ २ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोर्भातीत्याचक्षते ॥ ३ ॥

10 एतस्य ह् वा इदमक्षरस्य ऋतोरभ्रमित्याचक्षते ॥ ४ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोः कुभ्रमित्याचक्षते ॥ ५ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोः शुभ्रमित्याचक्षते ॥ ६ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोर्वृषभ इत्याचक्षते ॥ ७ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोर्दर्भ इत्याचक्षते ॥ ८ ॥

15 एतस्य ह् वा इदमक्षरस्य ऋतोर्यभतीत्याचक्षते ॥ ९ ॥

एतस्य ह् वा इदमक्षरस्य ऋतोः संभवतीत्याचक्षते ॥ १० ॥

तद्यत् किंच भा ३ इति च भा ३ इति च तदेतन्मिथुनं गायत्रम् ।

18 प्र मिथुनेन जायते । य एव वेद ॥ ११ ॥

इति तृतीयेऽध्याये सप्तमेऽनुवाके द्वितीयः खण्डः

---

3. MyL. °कला for °कलो.
5. P. तदेक्त्रियावृत्ति° MyI. तदेक्रियावृत्ति° for तदेतत्क्रियावृत्ति°; My. °शरीर-मतदे for °शरीरः । तदेतत्°; See CN.
8. P. तदिद् for तदिदम्.
10. My. अभूम् for अभ्रम्.
11. My. कुभूम् for कुभ्रम्.
13. My. वृषा for वृषभः; MyI. om. एतस्य .... दर्भ इत्याचक्षते .... यभतीत्याचक्षते (L. 15.).
14. P. दर्भं for दर्भ.
15. P. यो भाति for यभति.
17. MyLI. चभिति च तदेतत् for च भा३इति च तदेतत्.

## तृतीयः खण्डः

तदेतदमृतं गायत्रम् । एतेन वै प्रजापतिरमृतत्वमगच्छत् । एतेन देवाः । एतेनर्षयः ॥ १ ॥

तदेतद् ब्रह्म प्रजापतयेऽब्रवीत् ॥ २ ॥

प्रजापतिः परमेष्ठिने प्राजापत्याय ॥ ३ ॥ 5

परमेष्ठी प्राजापत्यो देवाय सवित्रे ॥ ४ ॥

देवः सविता अग्नये ॥ ५ ॥

अग्निरिन्द्राय ॥ ६ ॥

इन्द्रः काश्यपाय ॥ ७ ॥

काश्यप ऋश्यशृङ्गाय काश्यपाय ॥ ८ ॥ 10

ऋश्यशृङ्गः काश्यपो देवतरसे श्यावसायनाय काश्यपाय ॥ ९ ॥

देवतराः श्यावसायनः काश्यपः श्रुषाय वाह्नेयाय काश्यपाय ॥ १० ॥

श्रुषो वाह्नेयः काश्यपः इन्द्रोताय दैवापाय शौनकाय ॥ ११ ॥

इन्द्रोतो दैवापः शौनकः दृतय ऐन्द्रोतये शौनकाय ॥ १२ ॥

दृतिरैन्द्रोतिः शौनकः पुलुषाय प्राचीनयोग्याय ॥ १३ ॥ 15

पुलुषः प्राचीनयोग्यः सत्ययज्ञाय पौलुषये प्राचीनयोग्याय ॥ १४ ॥

सत्ययज्ञः पौलुषिः प्राचीनयोग्यः सोमशुष्माय सात्ययज्ञये प्राचीनयोग्याय ॥ १५ ॥

सोमशुष्मः सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वाशयाय आल्लकेयाय माहावृषाय राज्ञे ॥ १६ ॥ 20

हृत्स्वाशय आल्लकेयो माहावृषो राजा जनश्रुताय काण्ड्वियाय ॥ १७ ॥

जनश्रुतः काण्ड्वियः सायकाय जानश्रुतेयाय काण्ड्वियाय ॥ १८ ॥ 22

---

5. MyLI. before परमेष्ठिने adds काश्यपो.

12. MyI. शूषाय for श्रुषाय.

13. L. भूषः, MyI. शूषः for श्रुषः.

14. MyLI. दैवापिः for दैवापः.

17. My. °शुष्काय for °शुष्माय, P. सात्ययज्ञाय for सात्ययज्ञये.

19. My. °शुष्कः for शुष्मः.

21. L. °श्रुतायः for °श्रुताय; L. before काण्ड्वियाय adds सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वा.

सायको जानश्रुतेय. काण्ड्वियो नगरिणे जानश्रुतेयाय काण्ड्वि-
याय ॥ १९ ॥

नगरी जानश्रुतेयः काण्ड्वियः शङ्काय शाटचायनाय आत्रेयाय॥२०॥

शङ्कः शाटचायनिः आत्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय
5 ॥ २१ ॥

इति तृतीयेऽध्याये सप्तमेऽनुवाके तृतीयः खण्डः

## चतुर्थः खण्डः

राम. क्रातुजातेयो वैयाघ्रपद्य. शङ्खाय बाभ्रव्याय ॥ १ ॥

शङ्खो बाभ्रव्यो दक्षाय कात्यायनये आत्रेयाय ॥ २ ॥

10 दक्षः कात्यायनिः आत्रेय. कंसाय वारकये ॥ ३ ॥

कसो वारकि. प्रोष्ठपदाय वारक्याय ॥ ४ ॥

प्रोष्ठपदो वारक्य. कसाय वारक्याय ॥ ५ ॥

कसो वारक्यो जयन्ताय वारक्याय ॥ ६ ॥

जयन्तो वारक्य. कुबेराय वारक्याय ॥ ७ ॥

15 कुबेरो वारक्यो जयन्ताय वारक्याय ॥ ८ ॥

जयन्तो वारक्यो जनश्रुताय वारक्याय ॥ ९ ॥

जनश्रुतो वारक्य. मुदत्ताय पाराशर्याय ॥ १० ॥

मुदत्तः पाराशर्योऽपाढायोत्तराय पाराशर्याय ॥ ११ ॥

अपाढ उत्तर. पाराशर्यो विपश्चिते शकुनिमित्राय पारा-
20 शर्याय ॥ १२ ॥

विपश्चिच्छकुनिमित्रः पाराशर्यो जयन्ताय पाराशर्याय ॥ १३ ॥
23

इति तृतीयेऽध्याये सप्तमेऽनुवाके चतुर्थः खण्डः

---

3. MyI. शिङ्काय for शङ्काय
4. MyL. शिङ्क for शङ्क..
8. MyLP. have included the line: राम. क्रातुजातेयो वैयाघ्रपद्यः in the previous Khanda.
9. MyL. कात्यायनाय for कात्यायनये.
18. MyI. आषाढाय for अषाढाय.
19. MyI. आषाढः for अपाढः.

## पञ्चमः खण्डः

जयन्तः पाराशर्यः श्यामजयन्ताय लौहित्याय ॥ १ ॥
श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय ॥ २ ॥
पल्लिगुप्तो लौहित्यः सत्यश्रवसे लौहित्याय ॥ ३ ॥
सत्यश्रवा लौहित्यः कृष्णधृतये सात्यकये ॥ ४ ॥ 5
कृष्णधृतिः सात्यकिः श्यामसुजयन्ताय लौहित्याय ॥ ५ ॥
श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय ॥ ६ ॥
कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय ॥ ७ ॥
मित्रभूतिर् लौहित्यः श्यामजयन्ताय लौहित्याय ॥ ८ ॥
श्यामजयन्तो लौहित्यः त्रिवेदाय कृष्णराताय लौहित्याय ॥ ९ ॥ 10
त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय ॥ १० ॥
यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय ॥ ११ ॥
जयको लौहित्यः कृष्णराताय लौहित्याय ॥ १२ ॥
कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय ॥ १३ ॥
दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय ॥ १४ ॥ 15

विपश्चित् दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये दृढ-जयन्ताय लौहित्याय ॥ १५ ॥

वैपश्चितो दार्ढजयन्तिः दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढ-जयन्तये गुप्ताय लौहित्याय ॥ १६ ॥

तदेतदमृतं गायत्रम् । अथ यान्यन्यानि गीतानि काम्यान्येव 20
तानि । काम्यान्येव तानि ॥ १७ ॥

इति तृतीयेऽध्याये सप्तमेऽनुवाके पञ्चमः खण्डः

॥ सप्तमोऽनुवाकः समाप्तः ॥

## इति तृतीयोऽध्यायः 24

---

2. MyLPI. जयन्तः पाराशर्यः is included in the previous Khanda.

3. & 4. I. वल्लि for पल्लि.

23. MyLI. after अनुवाकः समाप्तः ॥ add:—
बहुत्वाद्धारणाशक्ता विस्मरन्त्यल्पबुद्धयः ।
यमहं त्रिंशदध्यायमलिखं त बृहद्गणम् ॥
MyI. after this add:—श्रीकृष्णाय परमगुरवे नमः ॥

## चतुर्थोऽध्यायः

### प्रथमोऽनुवाक :

#### प्रथमः खण्डः

श्वेताश्वो दर्शतो हरिनीलोऽसि हरितस्पृशः समानबुद्धो मा हिंसीः
5 न मां त्वं वेत्थ । प्रद्रव ॥ १ ॥

यदभ्यवचरण अभ्यवैषि स्वपन्तं पुरुषमकोविदम् अश्ममयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ २ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदम् अयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ३ ॥

10 यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ४ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥ ५ ॥

यदभ्यवचरणाभ्यवैषि स्वपन्तं पुरुषमकोविदं सुवर्णमयेन वर्मणा
15 वरुणोऽन्तर्दधातु मा ॥ ६ ॥

आयुर्माता मतिः पिता नमस्त आविशोषण । ग्रहो नामासि विश्वायुस्तस्मै ते विश्वाहा नमो नमस्ताम्राय नमो वरुणाय नमो जिघांसते ॥ ७ ॥

यक्ष्म राजन् मा मां हिंसीः । राजन् यक्ष्म मा हिंसीः । तयोः
20 संविदानयोः सर्वमायुरयान्यहम् ॥ ८ ॥

॥ इति चतुर्थेऽध्याये प्रथमोऽनुवाकः समाप्तः ॥

---

6. P. °चरणः for चरण throughout; MyS. after अकोविदम् add इति; My. मन्ममयेन, S. मन्मयेन for अश्ममयेन.
16. MyS. मातन for माता.
17. MyLSI. विश्वाहाय for विश्वाहा.
18. MySI. जिघांसवे for जिघांसते.
20. MyLS. अयाणि for अयानि.

## द्वितीयोऽनुवाकः

पुरुषो वै यज्ञः ॥ १ ॥

तस्य यानि चतुर्विंशतिर्वर्षाणि तत् प्रातःसवनम् । चतुर्विंशत्यक्षरा गायत्री । गायत्रं प्रातःसवनम् ॥ २ ॥

तद् वसूनाम् । प्राणा वै वसवः । प्राणा हीदं सर्व वस्वाददते ॥ ३ ॥ 5

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात् प्राणा वै वसवः । इदं मे प्रातःसवनं माध्यंदिनेन सवनेन अनुसंतनुतेति । अगदो हैव भवति ॥ ४ ॥

अथ यानि चतुश्चत्वारिंशत वर्षाणि तन्माध्यंदिनं सवनम् । 10 चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिनं सवनम् ॥ ५ ॥

तद्रुद्राणाम् । प्राणा वै रुद्राः । प्राणा हीदं सर्व रोदयन्ति ॥६॥

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् । स ब्रूयात् प्राणा रुद्रा इदं मे माध्यंदिनं सवनं तृतीयसवनेनानुसंतनुतेति । अगदो हैव भवति ॥७॥

अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत् तृतीयसवनम् । अष्टा- 15 चत्वारिंशदक्षरा जगती । जागत तृतीयसवनम् ॥ ८ ॥

तदादित्यानाम् । प्राणा वा आदित्याः । प्राणा हीदं सर्वमाददते ॥ ९ ॥

स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात् । प्राणा आदित्या इदं मे तृतीयसवनमायुपानुसंतनुतेति । अगदो हैव भवति ॥ १० ॥ 20

एतद्ध तद्विद्वान् ब्राह्मण उवाच । महिदास ऐतरेय उपतपति । किमिदमुपतपसि योऽहमनेन उपतपता न प्रेष्यामीति । स ह षोडशशतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैनं प्राणः साम्यायुषो जहाति । य एवं वेद ॥ ११ ॥

॥ इति चतुर्थेऽध्याये द्वितीयोऽनुवाकः समाप्तः ॥ 25

---

2. S. धर्म्यः for यज्ञः.
7. MySL. प्राणः for प्राणाः; P om. वै.
10. S. °चत्वारिंशवर्पाणि for चत्वारिंशतं वर्षाणि.
13. My. न यदि for स यदि.

### तृतीयोऽनुवाकः

त्रियायुषं कश्यपस्य जमदग्नेस्त्रियायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणोः ॥ १ ॥
स नो मयोभूः पितो आविशस्व शंतोकाय तनुवे स्योनः ॥ २ ॥
5 येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥ ३ ॥

॥ इति चतुर्थेऽध्याये तृतीयोऽनुवाकः समाप्तः ॥

---

### चतुर्थोऽनुवाकः

अरण्यस्य वत्सोऽसि विश्वो नाम । विश्वाभिरक्षणोऽपां
10 वत्सोऽसि वरुणस्य दूतोऽन्तर्धिर्नाम ॥ १ ॥

यथा त्वममृत मर्तेभ्योऽन्तर्हितोऽसि एवं त्वमस्मानघायुभ्योऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः ॥ २ ॥

॥ इति चतुर्थेऽध्याये चतुर्थोऽनुवाकः समाप्तः ॥

---

2. P. त्र्यायुषम् see CN.; MyS. काश्यपस्य for कश्यपस्य.
3. My. पुष्णाति for पुष्पाणि.
4. पिताविशस्व शान्तिको यस् for पितो आविशस्वशं—.
9. MySI. अरण्य° for अरण्यस्य; P. अन्तर्धिनाम for अन्तर्धिर्नाम; P. विश्वनामा for विश्वो नाम; MySLI. विश्वाभिरक्षमापां for विश्वाभिरक्षणोऽपां.
10. P. पक्वः for वत्सः.
11. P. अमृतो for अमृत; S. न हितोऽसि for अन्तर्हितोऽसि.

## पञ्चमोऽनुवाकः

व्युषि सविता भवसि । उदेष्यन् विष्णुः । उद्यन् पुरुषः । उदितो बृहस्पतिः । अभिप्रयन् मघवा । इन्द्रो वैकुण्ठः मध्यंदिने । भगोऽपराह्णे । उग्रो देवो लोहितायन् । अस्तमिते यमो भवसि ॥ १ ॥

अश्नसु सोमो राजा । निशाया पितृराजः । स्वप्ने मनुष्यान् प्रविशसि । पयसा पशून् ॥ २ ॥ 5

विरात्रे भवो भवसि । अपररात्रे अङ्गिराः । अग्निहोत्रवेलायां भृगुः ॥ ३ ॥

तस्य तदेतदेव मण्डलमूधः । तस्यैतौ स्तनौ यद्वाक् च प्राणश्च । ताभ्यां मे धुक्ष्व अध्यायं ब्रह्मचर्यं प्रजां पशून् स्वर्गं लोकं सजातवनस्याम् ॥ ४ ॥ 10

एता आशिष आशासे । भूर्भुवः सुवः । उदिते शुक्रमादिश । तदात्मन् दधे ॥ ५ ॥

॥ इति चतुर्थेऽध्याये पञ्चमोऽनुवाकः समाप्तः ॥ 14

---

3. My. वै कर्णः, S. वै कूर्णं. for वैण्कुठः.
5. My. अश्नत्सु, L. अग्नसु for अश्नसु.
9. S. om. तत्; My. ते for तत् 247

षष्ठोऽनुवाकः

## प्रथमः खण्डः

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस ।। १ ।।
तदु ह कुरुपाञ्चालानां ब्राह्मणा ऊचुः । भगेरथो ह वा अयमै-
5 क्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाणः एतेन कथां वदिष्याम इति ।। २ ।।
तं हाभ्येयुः । तेभ्यो हाभ्यागतेभ्योऽपचितीश्चकार ।। ३ ।।
अथ हैषां स भाग आवव्राज उप्त्वा केशश्मश्रूणि नखान् निकृत्य
आज्येन अभ्यज्य दण्डोपानहं बिभ्रत् ।। ४ ।।
तान् होवाच । ब्राह्मणा भगवन्तः कतमो वस्तद् वेद यथा-
10 श्रावितप्रत्याश्राविते देवान् गच्छत इति ।। ५ ।।
अथ होवाच । कतमो वस्तद्वेद यद्विदुषः सूद्गाता सुहोता स्व-
ध्वर्युः सुमानुषविदाजायत इति ।। ६ ।।
अथ होवाच । कतमो वस्तद् वेद यच्छन्दांसि प्रयुज्यन्ते
यत्तानि सर्वाणि संस्तुतानि अभिसंपद्यन्ते इति ।। ७ ।।
15 अथ होवाच । कतमो वस्तद् वेद यथा गायत्र्या उत्तमे अक्षरे
पुनर्यज्ञमपिगच्छत इति ।। ८ ।।
अथ होवाच । कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न
हिंसन्तीति ।। ९ ।।

इति चतुर्थेऽध्याये षष्ठेऽनुवाके प्रथमः खण्डः

## द्वितीयः खण्डः

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ।। १ ।।
तेषां ह कुरुपाञ्चालानां बको दाल्भ्योऽनूचान आस ।। २ ।।

---

3. SMy. भगो for भगे°.
7. S. सभाभ्यः for स भागः.
8. S. om. आज्येन; My. अञ्ज्य, L. अज्य for आज्येन.
21. S. after एतान् adds व.

स होवाच । यथाश्रावितप्रत्याश्राविते देवान् गच्छतः इति । प्रच्यां वै राजन् दिश्याश्रावितप्रत्याश्राविते देवान् गच्छतः । तस्मात् प्राङ् तिष्ठन्नाश्रावयति प्राङ् तिष्ठन् प्रत्याश्रावयति इति ॥ ३ ॥

अथ होवाच । यद्विदुषः सूद्गाता सुहोता स्वध्वर्युः सुमानुषविदाजायत इति । यो वै मनुष्यस्य संभूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्युः सुमानुषविदाजायत इति । प्राणा उ ह् वाव राजन् मनुष्यस्य संभूतिरेवेति ॥ ४ ॥ 5

अथ होवाच । यच्छन्दांसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतान्यभिसंपद्यन्ते इति गायत्रीमु ह् वाव राजन् सर्वाणि च्छन्दांसि संस्तुतान्यभिसंपद्यन्त इति ॥ ५ ॥ 10

अथ होवाच । यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह वाव राजन् गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥ ६ ॥

इति चतुर्थेऽध्याये षष्ठेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः 15

अथ होवाच । यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति । यो वै गायत्र्यै मुखं वेदेति होवाच तं दक्षिणाः प्रतिगृहीताः न हिंसन्तीति ॥ १ ॥

अग्निर्ह वाव राजन् गायत्रीमुखम् । तस्माद् यदग्नावभ्यादधाति भूयानेव स तेन भवति वर्धते एवमेवैवं विद्वान् ब्राह्मणः प्रतिगृह्णन् भूयानेव भवति वर्धत उ एवेति ॥ २ ॥ 20

स होवाच । अनूचानो वै किलायं ब्राह्मण आस । त्वामहमनेन यज्ञेनैमीति ॥ ३ ॥ 22

---

2. L. अस्मात् for तस्मात्.
7. MyL. after संभूतिः add धरः; S. संभूतिद्धुरः for संभूतिः.
16. The passage अथ होवाच । यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति is included in the previous chapter in MyLSP.

तस्य वै ते तथोद्गास्यामीति होवाच । यथैकराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥ ४ ॥

तस्मा एतेन गायत्रेणोद्गीथेनोज्जगौ । स हैकराडेव भूत्वा स्वर्गं लोकमियाय । तेन हैतेन एकराडेव भूत्वा स्वर्गं लोकमेति ॥ ५ ॥

5 ओं वा इति द्वे अक्षरे । ओं वा इति चतुर्थे । ओं वा इति षष्ठे । हुम् भा ओं वागित्यष्टमे ॥ ६ ॥

तेन हैतेन प्रतीदर्शोऽस्य भयदस्यासमात्यस्योज्जगौ ॥ ७ ॥

तं होवाच । किं त आगास्यामीति । स होवाच । हरीमे देवाश्वा वा गायेति । तथेति । तौ हास्मा आजगौ । तौ हैन-
10 माजग्मतुः ॥ ८ ॥

स वा एष उद्गीथः कामानां संवत् । ओंवा३च् ओंवा३च् ओंवा३च् हुम् भा ओं वागिति । साङ्गो हैव सतनुरमृतः संभवति । य एतदेवं वेद । अथो यस्यैवं विद्वानुद्गायति ॥ ९ ॥

इति चतुर्थेऽध्याये षष्ठेऽनुवाके तृतीयः खण्डः

15 ॥ षष्ठोऽनुवाकः समाप्तः ॥

---

8. S. किंच for किं त.

9. S. वागा एति for वा गायेति.

12. S. साङ्गे for साङ्गो.

## सप्तमोऽनुवाक:

### प्रथम: खण्ड:

पुरुषो वै यज्ञ: । पुरुषो ह्योद्गीथ: । अथैत एव मृत्यवो यदग्नि-र्वायुरादित्यश्चन्द्रमा: ।। १ ।।

ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति । तस्य वाचमेवा-ग्निरभिदधाति । प्राणं वायु: । चक्षुरादित्य: । श्रोत्रं चन्द्रमा: ।। २ ।। 5

तदाहु: । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्यु-पाशान् मुञ्चतीति ।। ३ ।।

तद्यस्यैवं विद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवा-स्योन्मुञ्चति ।। ४ ।। 10

अथ यस्यैवं विद्वानुद्गायति य एवास्य प्राणे मृत्युपाशस्त-मेवास्योन्मुञ्चति ।। ५ ।।

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाश: तमेवास्योन्मुञ्चति ।। ६ ।।

अथ यस्यैवं विद्वान् निधनमुपैति य एवास्य श्रोत्रे मृत्युपाशस्त-मेवास्योन्मुञ्चति ।। ७ ।। 15

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशान् उन्मुञ्चति ।। ८ ।।

तदाहु: । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्यु-पाशानुन्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्यो: स्पृणातीति ।। ९ ।। 20

इति चतुर्थेऽध्याये सप्तमेऽनुवाके प्रथम: खण्ड:

---

### द्वितीय: खण्ड:

तद्यस्यैवं विद्वान् हिंकरोति य एवास्य लोमसु मृत्युपाशस्त-स्मादेवैनं स्पृणाति ।। १ ।। 24

अथ यस्यैवं विद्वान् प्रस्तौति य एवास्य त्वचि मृत्युपाशस्त-
स्मादेवैनं स्पृणाति ॥ २ ॥

अथ यस्यैवं विद्वानादिमादत्ते य एवास्य मांसेषु मृत्युपाशस्त-
स्मादेवैनं स्पृणाति ॥ ३ ॥

5 अथ यस्यैवं विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्त-
स्मादेवैनं स्पृणाति ॥ ४ ॥

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्याङ्गेषु मृत्युपाशस्त-
स्मादेवैनं स्पृणाति ॥ ५ ॥

अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्थिषु मृत्युपाशस्त-
10 स्मादेवैनं स्पृणाति ॥ ६ ॥

अथ यस्यैवं विद्वान् निधनमुपैति य एवास्य मज्जासु मृत्युपाशः
स तस्मादेवैनं स्पृणाति ॥ ७ ॥

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशानु-
न्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्योः स्पृणाति ॥ ८ ॥

15 तदाहुः । स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधि मृत्यु-
पाशानुन्मुच्य अथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा
दधातीति ॥ ९ ॥

स वा एष इन्द्रो वैमृध उद्यन् भवति सवितोदितो मित्रः संगव-
काल इन्द्रो वैकुण्ठो मध्यंदिने समावर्तमानः शर्व उग्रो देवो लोहितायन्
20 प्रजापतिरेव संवेशेऽस्तमितः ॥ १० ॥

तद्यस्यैवं विद्वान् हिंकरोति य एवास्योद्यतः स्वर्गो लोकः
22 तस्मिन्नेवैनं दधाति ॥ ११ ॥

---

1. L. क्वचित् for त्वचि.
3. L. om. अथ.... आदिमादत्ते.... स्पृणाति.
18. MyS. उद्यान् for उद्यन्.
19. I. माध्यं for मध्यं.
20. MyLS. संवेशः for संवेशे.

अथ यस्यैवं विद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १२ ॥

अथ यस्यैवं विद्वान् आदिमादत्ते य एवास्य संगवकाले स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १३ ॥

अथ यस्यैवं विद्वानुद्गायति य एवास्य मध्यंदिने स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १४ ॥ 5

अथ यस्यैवं विद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १५ ॥

अथ यस्यैवं विद्वानुपद्रवति य एवास्यास्तंयतः स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १६ ॥ 10

अथ यस्यैवं विद्वान्निधनमुपैति य एवास्यास्तमिते स्वर्गो लोकः तस्मिन्नेवैनं दधाति ॥ १७ ॥

एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधि मृत्युपाशान् उन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योः स्पृत्वा स्वर्गे लोके सप्तधा दधाति ॥ १८ ॥ 15

**इति चतुर्थेऽध्याये सप्तमेऽनुवाके द्वितीयः खण्डः**

॥ सप्तमोऽनुवाकः समाप्तः ॥

---

5. MyLS. माध्यं for मध्यं.

14. I. सप्त for सप्तधा.

## अष्टमोऽनुवाकः

### प्रथमः खण्डः

षड्ढ वै देवताः स्वयभुवः अग्निर्वायुरसावादित्यः प्राणोऽन्नं वाक् ॥ १ ॥

5 ताः श्रैष्ठ्ये व्यवदन्त । अहं श्रेष्ठास्मि । अहं श्रेष्ठास्मि । मां श्रियमुपाध्वमिति ॥ २ ॥

ता अन्योन्यस्यै श्रेष्ठतायै नातिष्ठन्त । ता अब्रुवन् । न वा अन्योन्यस्यै श्रेष्ठतायै तिष्ठामहै । एत संप्रब्रवामहै यथा श्रेष्ठाः स्म इति ॥ ३ ॥

10 ता अग्निमब्रुवन् कथं त्वं श्रेष्ठोऽसीति ॥ ४ ॥

सोऽब्रवीत् । अहं देवानां मुखमस्मि । अहमन्यासां प्रजानाम् । मय्याहुतयो हूयन्ते । अहं देवानामन्नं विकरोमि । अहं मनुष्याणाम् ॥ ५ ॥

स यद[हं न]स्याममुखा एव देवाः स्युरमुखा अन्याः प्रजाः । नाहुतयो हूयेरन् । न देवानामन्नं विक्रियेत न मनुष्याणाम् ॥ ६ ॥

15 तत इदं सर्व पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ७ ॥

एवमेति होचुः । नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८ ॥

अथ वायुमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ ९ ॥

सोऽब्रवीत् । अहं देवानां प्राणोऽस्मि । अहमन्यासां प्रजानाम् ।

20 यस्मादहमुत्क्रामामि ततः स प्रप्लवते ॥ १० ॥

---

5. MyLSI. श्रैष्ठ्येष्ववदन्त for श्रैष्ठ्ये व्यवदन्त.

7. & 8. I. अन्यान्यस्यै for अन्योन्यस्यै.

8. P. एता for एत.

12. P. मया for मयि.

13. MyLSI. यदस्यां P. यन्न स्या for यदहं न स्या See CN.; MyS. मुखा. for अमुखा..

15. MyLS. शिष्य for °शिष्येत

स यदहं न स्यां तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ११ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥ १२ ॥

**इति चतुर्थेऽध्याये अष्टमेऽनुवाके प्रथमः खण्डः** 5

---

### द्वितीयः खण्डः

अथादित्यमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ १ ॥

सोऽब्रवीत् । अहमेवोद्यन्नहर्भवामि । अहमस्तंयन् रात्रिः । मया चक्षुषा कर्माणि क्रियन्ते । स यदहं न स्यां नैवाहः स्यात् । न रात्रिः । न कर्माणि क्रियेरन् ॥ २ ॥ 10

तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ३ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत । यत् त्वं न स्या इति ॥ ४ ॥

अथ प्राणमब्रुवन् । कथमु त्वं श्रेष्ठोऽसीति ॥ ५ ॥

सोऽब्रवीत् प्राणो भूत्वा अग्निर्दीप्यते । प्राणो भूत्वा वायुराका- 15 शमनुभवति । प्राणो भूत्वा आदित्य उदेति । प्राणादन्नम् । प्राणाद्वाक् ॥ ६ ॥

स यदहं न स्यां तत इदं सर्वं पराभवेत् । न किंचन परिशिष्येतेति ॥ ७ ॥

एवमेवेति होचुः । नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥ ८ ॥ 20

अथान्नमब्रुवन् । कथमु त्वं श्रेष्ठमसीति ॥ ९ ॥

तदब्रवीन्मयि प्रतिष्ठायाग्निर्दीप्यते । मयि प्रतिष्ठाय वायुराकाशमनुविभवति । मयि प्रतिष्ठायादित्य उदेति । मदेव प्राणः । 23 मद्वाक् ॥ १० ॥

---

23. My. अनुभवति for अनुविभवति·

स यदहं न स्यां तत इदं सर्व पराभवेत् । ततो न किंचन परिशिष्येतेति ॥ ११ ॥

एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत् त्वं न स्या इति ॥१२॥

अथ वाचमब्रुवन् । कथमु त्वं श्रेष्ठासीति ॥ १३ ॥

5 साब्रवीत् मयैवेद विज्ञायते । मयादः । स यदहं न स्यां नैवेदं विज्ञायेत । मादः ॥ १४ ॥

तत इदं सर्वं पराभवेत् । नैवेह किंचन परिशिष्येतेति ॥ १५ ॥

एवमेवेति होचुर् नैवेह किंचन परिशिष्येत । यत् त्वं न स्या इति ॥ १६ ॥

10 इति चतुर्थेऽध्याये अष्टमेऽनुवाके द्वितीयः खण्डः

---

## तृतीयः खण्डः

ता अब्रुवन् । एता वै किल सर्वा देवताः । एकैकामेवानु स्मः । स यन्नु नः सर्वासां देवतानामेकाचन न स्यात् तत इदं सर्वं पराभवेत् । ततो न किंचन परिशिष्येत । हन्त सार्धं समेत्य यच्छ्रेष्ठं तत्सामेति ॥१॥

15 ता एतस्मिन् प्राण ओकारे वाच्यकारे समायन् । तद्यत् समायन् तत् साम्नः सामत्वम् ॥ २ ॥

ता अब्रुवन् यानि नो मर्त्यान्यनपहतपाप्मानि अक्षराणि तान्युद्धृत्यामृतेष्वपहतपाप्मसु शुद्धेष्वक्षरेषु गायत्रं गायामाग्नौ वायावादित्ये प्राणेऽन्ने वाचि । येनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥ ३ ॥

20

---

1. My. om. स यदहं....विज्ञायते मयादः. (L. 5)
5. S. यन्न स्या for यदहं न स्यां.
7. I. ततो न for नैवेह; MyLS. शिष्यति for °शिष्येत.
13. L. नः स्यात् for न स्यात्.
14. MyI. यस्मै एतदसामेति for यच्छ्रेष्ठं तत्; P. तपसामेति for तत्सामेति.
15. L. वाच्चकारे for वाच्यकारे.
19. P. तेन for येन.

एत्यग्नेरमृतमपहतपाप्म शुद्धमक्षरम् । ग्निरित्यस्य मर्त्य-
मनपहतपाप्माक्षरम् ॥ ४ ॥

वेति वायोरमृतमपहतपाप्म शुद्धमक्षरम् । युरित्यस्य मर्त्य-
मनपहतपाप्माक्षरम् ॥ ५ ॥

ए (ऐ?) त्यादित्यस्यामृतमपहतपाप्म शुद्धमक्षरम् । त्येत्यस्य 5
मर्त्यमनपहतपाप्माक्षरम् ॥ ६ ॥

प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरम् । णेत्यस्य मर्त्य-
मनपहतपाप्माक्षरम् ॥ ७ ॥

एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरम् । न (न्न?) मित्यस्य
मर्त्यमनपहतपाप्माक्षरम् ॥ ८ ॥ 10

वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरम् । गित्यस्यै मर्त्यमन-
पहतपाप्माक्षरम् ॥ ९ ॥

ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्य अमृतेष्वपहत-
पाप्मसु शुद्धेषु अक्षरेषु गायत्रमागायन् अग्नौ वायावादित्ये प्राणेऽन्ने
वाचि । तेनापहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥ १० ॥ 15

अपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥ ११ ॥

इति चतुर्थेऽध्याये अष्टमेऽनुवाके तृतीय खण्ड

---

## चतुर्थः खण्डः

ता ब्रह्माब्रुवन् । त्वयि प्रतिष्ठायैतमुद्यच्छामेति । ता ब्रह्माब्रवीत्
आस्येन प्राणेन युष्मान् आस्येन प्राणेन मामुपाप्नवाथेति ॥ १ ॥ 20

---

1. S. अर्द्धम् for शुद्धम्
5 S. om एत्यादित्यस्य.. त्येत्यस्य. . क्षरम् (L 6).
9. I. अन्नम् for न (न्नम् ?) म्.
14. I. अगायन् for आगायन्.
20 MyI. आस्येन्न न. L आस्येन्नेन, S. आस्येग्ने न for आस्येन; MyL. युष्मा for युष्मान्

ता एतेन प्राणेन ओकारेण वाच्यकारमभिनिमेष्यन्त्यो हिंकाराद्
भकारमोकारेण वाचमनुस्वरन्त्य उभाभ्यां प्राणाभ्यां गायत्रमगायन् ।
ओवा३च् ओवा३च् ओवा३च् हुम् भा वो वा इति ॥ २ ॥

स यथोभयापदी प्रतितिष्ठति एवमेव स्वर्गे लोके प्रत्यतिष्ठन् ।
5 प्रति स्वर्गे लोके तिष्ठति य एवं वेद ॥ ३ ॥

य उ ह् वा एवंविदस्माल्लोकात् प्रैति स प्राण एव भूत्वा वायुम-
प्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं वृष्ट्यैवेमं लोकमनुविभवति ॥४॥

ऋषयो ह् स सत्रमासां चक्रिरे । ते पुनःपुनर्बह्वीभिः बह्वीभिः
प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चन बुबुधिरे ॥ ५ ॥

10 त उ श्रमेण तपसा व्रतचर्येण इन्द्रमवरुरुधिरे ॥ ६ ॥

तं होचुः स्वर्गं वै लोकमैप्सिष्म । ते पुनः पुनः बह्वीभिः बह्वीभिः
प्रतिपद्भिः स्वर्गस्य लोकस्य द्वारं नानु चनाभुत्स्महि । तथा नोऽनुशाधि
यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं
गत्वा स्वर्गं लोकमियामेति ॥ ७ ॥

15 तान् होवाच । को वः स्थविरतम इति । अहमित्यगस्त्यः ॥ ८ ॥

इति चतुर्थेऽध्याये अष्टमेऽनुवाके चतुर्थः खण्डः

---

## पञ्चमः खण्डः

स वा एहीति होवाच । तस्मै वै ते अहं तद् वक्ष्यामि यद्विद्वांसः
स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा
20 स्वर्गं लोकमेष्यथेति ॥ १ ॥

---

1. MyLSI. °निमेषन्त्यो for °निमेष्यन्त्यो.
4. MySI. °तिष्ठेत्, L. °तिष्ठत् for °तिष्ठति; S. व्यतिष्ठन् for प्रत्यतिष्ठन्·
6. S. प्राणाः for प्राणः.
7. My. अनुभवति for अनुविभवति.
12. My. °भूत्स्महि LS °भूत् स्म हि for °भुत्स्महि.
15. In MyLSPI. अहमित्यगस्त्यः is taken over to the next Khanda.
19. I. after लोकस्य adds: द्वारमवैवं.

तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाग्नौ वायावा दित्ये प्राणेऽन्ने वाचि ॥ २ ॥

ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्ताः स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥ ३ ॥

एवमेवैवं विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञाय अनार्तः स्वस्ति 5 संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ॥ ४ ॥

**इति चतुर्थेऽध्याये अष्टमेऽनुवाके पञ्चमः खण्डः**

॥ अष्टमोऽनुवाकः समाप्तः ॥

## नवमोऽनुवाकः

### प्रथमः खण्डः

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायोवाच ॥१॥
अगस्त्य इषाय श्यावाश्वये ॥ २ ॥
5 इषः श्यावाश्वि. गौषूक्तये ॥ ३ ॥
गौषूक्तिर्ज्वालायनाय ॥ ४ ॥
ज्वालायनः शाट्यायनये ॥ ५ ॥
शाट्यायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय ॥ ६ ॥
रामः क्रातुजातेयो वैयाघ्रपद्यः शङ्खाय बाभ्रव्याय ॥ ७ ॥
10 इति चतुर्थेऽध्याये नवमेऽनुवाके प्रथमः खण्डः

### द्वितीयः खण्डः

शङ्खो बाभ्रव्यो दक्षाय कात्यायनय आत्रेयाय ॥ १ ॥
दक्षः कात्यायनिरात्रेयः कंसाय वारक्याय ॥ २ ॥
कंसो वारक्यः सुयज्ञाय शाण्डिल्याय ॥ ३ ॥
15 सुयज्ञः शाण्डिल्योऽग्निदत्ताय शाण्डिल्याय ॥ ४ ॥
अग्निदत्तः शाण्डिल्य. सुयज्ञाय शाण्डिल्याय ॥ ५ ॥
सुयज्ञः शाण्डिल्यः जयन्ताय वारक्याय ॥ ६ ॥
जयन्तो वारक्यो जनश्रुताय वारक्याय ॥ ७ ॥
जनश्रुतो वारक्य. सुदत्ताय पाराशर्याय ॥ ८ ॥
20 सैषा शाट्यायनी गायत्रस्योपनिषद् एवमुपासितव्या ॥ ९ ॥
इति चतुर्थेऽध्याये नवमेऽनुवाके द्वितीयः खण्डः
॥ नवमोऽनुवाकः समाप्तः ॥
॥ **जैमिनीयोपनिषद्ब्राह्मणं समाप्तम्** ॥

---

9. MyLSPI. शङ्खाय बाभ्रव्याय is taken over to the next Khanda.
20. MyS. उपासितव्यम् for उपासितव्या.

The केनोपनिषद् which is part of this Brāhmana begins hereafter from the 10th अनुवाक. It contains altogether eleven Khandas in three anuvākas. We have not included this portion in our edition for obvious reason.